(ಸಂಸ್ಕೃತ ಸಾಹಿತ್ಯದ ಸಾಮಾನ್ಯ ಚಿತ್ರದ ಪರಿಚಯವನ್ನು ಬಯಸುವ ಅಧ್ಯಾಪಕ—ವಿದ್ಯಾರ್ಥಿಗಳು ಡಾ. ಎ. ಆರ್. ಕೃಷ್ಣಶಾಸ್ತ್ರಿಗಳ ಸಂಸ್ಕೃತ ನಾಟಕ ಎಂಬ ಗ್ರಂಥವನ್ನೂ ಡಾ. ಕೆ. ಕೃಷ್ಣಮೂರ್ತಿಯವರ ಸಂಸ್ಕೃತ ಕಾವ್ಯ ಎಂಬ ಗ್ರಂಥವನ್ನೂ ಪರಿಶೀಲಿಸಬೇಕು )

## (ಅ) ರಾಮಚರಿತಂ

ರಾಮಚರಿತವನ್ನು ರಚಿಸಿದ ಕವಿ ಅಭಿನಂದ. ಉತ್ತರೋತ್ತರ ಬಂದ ಕವಿಗಳು ಈತನನ್ನು ಅಭಿನಂದನ, ಗೌಡಾಭಿನಂದನ, ಶಾತಾನಂದ, ಆರ್ಯವಿಲಾಸ, ವಿಲಾಸ ಎಂದು ಹೆಸರಿಸಿದ್ದಾರೆ. ಈತನ ತಂದೆ ಶತಾನಂದ. ಅಭಿನಂದನು ಆಸ್ತಿಕನೂ ಪೌರಾಣಿಕ ಹಿಂದೂ ಧರ್ಮದ ಶ್ರದ್ಧಾಳುವೂ ಆದವನು.

ಅಭಿನಂದನನ್ನು ಕ್ರಿ. ಶ. ಸುಮಾರು ಹನ್ನೊಂದನೆಯ ಶತಮಾನದಿಂದಲೇ ಕಾಳಿದಾಸ ಬಾಣ, ವಾಕ್ಪತಿರಾಜ ಮುಂತಾದ ಸುಪ್ರಸಿದ್ಧ ಪೂರ್ವಕವಿಗಳ ಶ್ರೇಣಿಯಲ್ಲಿ ಸೇರಿಸಿ ಉತ್ತರೋತ್ತರ ಬಂದ ಕವಿಗಳು ಪ್ರಶಂಸಿಸಿದ್ದಾರೆ. ಇದರಲ್ಲಿ ಹನ್ನೊಂದನೆಯ ಶತಮಾನದಲ್ಲಿದ್ದ ಸೊಡ್ಢಲನೂ ಒಬ್ಬನು. ಇವನ ಕೃತಿ ಉದಯಸುಂದರೀ ಕಥಾ. ಹದಿಮೂರನೆಯ ಶತಮಾನ ದಲ್ಲಿದ್ದ ಸೋಮೇಶ್ವರ ದೇವನು ತನ್ನ 'ಕೀರ್ತಿಕೌಮುದೀ' ಎಂಬ ಗ್ರಂಥದಲ್ಲೂ ಅಭಿನಂದನನ್ನು ಸುಪ್ರಸಿದ್ಧ ಕವಿಗಳ ಶ್ರೇಣಿಗೆ ಸೇರಿಸಿದ್ದಾನೆ.

ಅಭಿನಂದನು ಬಂಗಾಳದವನೆಂತಲೂ ಒಂಬತ್ತನೆಯ ಶತಮಾನದಲ್ಲಿ ಬಂಗಾಳದಲ್ಲಿ ಆಳುತ್ತಿದ್ದ ಹಾರವರ್ಷ ಯುವರಾಜನು ಈತನ ಆಶ್ರಯದಾತನೆಂದೂ ವಿಮರ್ಶಕರು ಅಭಿಪ್ರಾಯ ವ್ಯಕ್ತಪಡಿಸಿದ್ದಾರೆ.

ರಾಮ ಚರಿತದಲ್ಲಿ ನಲವತ್ತು ಸರ್ಗಗಳಿವೆ. ಕಾವ್ಯದ ವಸ್ತು ರಾಮಾಯಣದ ಕಥೆ. ಕಿಷ್ಕಿಂಧಾ ಕಾಂಡದ ಮಧ್ಯ ಭಾಗದ ಕಡೆಯಿಂದ ಕಾವ್ಯವು ಪ್ರಾರಂಭವಾಗಿ ಯುದ್ಧಕಾಂಡದ ಕಥೆಯೊಡನೆ ಮುಕ್ತಾಯವಾಗುತ್ತದೆ. ಶೈಲಿ ಲಲಿತ, ಸುಂದರ, ಹೃದ್ಯ. ಕವಿಯು ರಾಮಾಯಣದ ಕಥೆಯಲ್ಲಿ ಕೆಲವು ಮಾರ್ಪಾಡುಗಳನ್ನು ಮಾಡಿಕೊಂಡಿದ್ದಾನೆ. ಇಲ್ಲಿ ಆರಿಸಿರುವ ಭಾಗವು ಚತುರ್ಥ ಸರ್ಗಕ್ಕೆ ಸೇರಿದ್ದು. ಪದ್ಯ 51 ರಿಂದ ಪ್ರಾರಂಭ.

**ಪೂರ್ವ ಕಥೆ**

ರಾಮಚಂದ್ರನು ಸೀತಾಲಕ್ಷ್ಮಣರೊಡಗೂಡಿ ಪಿತೃವಚನವನ್ನು ಪರಿಪಾಲಿಸಲು ವನಕ್ಕೆ ನಡೆದಿದ್ದಾನೆ. ರಾವಣನು ಸೀತೆಯನ್ನು ಅಪಹರಿಸಿದ್ದಾನೆ. ರಾಮಲಕ್ಷ್ಮಣರು ಸೀತೆಯನ್ನು ಅರಸುತ್ತಾ ಕಿಷ್ಕಿಂಧೆಯ ಬಳಿಗೆ ಬಂದಿದ್ದಾರೆ. ಸುಗ್ರೀವ ಸಖ್ಯವು ನೆರವೇರಿದೆ. ರಾಮನ ಶರಣಾಗತ ಸುಗ್ರೀವ ರಕ್ಷಣೆಗಾಗಿ ವಾಲಿಯನ್ನು ಸದೆಬಡಿದಿದ್ದಾನೆ. ಶರತ್ಕಾಲವು ಪ್ರಾಪ್ತ

ಘಾಗಿದೆ. ಸೀತೆಯನೆನಪು ಮರುಕಳಿಸಿ ರಾಮನು ಶೋಕಗ್ರಸ್ತನಾಗಿದ್ದಾನೆ. ಸುಗ್ರೀವನು ಸೀತಾವಿಚಯನಕ್ಕಾಗಿ ಇನ್ನೂ ಹರಿವೀರರನ್ನು ಕಳುಹಿಸಿಲ್ಲ. ಆಗ ಅಣ್ಣನ ದುಃಖವನ್ನು ಕಂಡು ಲಕ್ಷ್ಮಣನು ಮರುಗುತ್ತಿದ್ದಾನೆ. ಇಲ್ಲಿಂದ ಕಥೆ ಆರಂಭವಾಗಿದೆ.

# अभिनन्दकृतं रामचरितम्

## चतुर्थः सर्गः

न लक्ष्मणोऽप्यीरितरामवैशसः
शशाक रोद्धुं रयमश्रुणस्तदा ।
बभूवतुर्भिन्नघनाघनोदरौ
नभो नभस्याविव तौ समागतौ ॥ १ ॥

गुणा न यूयं नियतिर्गरीयसी
यदेष देवश्चिरमश्रुभाजनम् ।
प्रसीद कैकेयि मनोरथाधिकं
विलोकयार्यस्य दशाविपर्ययम् ॥ २ ॥

सहाश्रुमुञ्चन्ननुगच्छसि प्रभुं
प्रयासि मृद्नन् विषमाणि नाग्रतः ।
असूनशक्तोऽपि बिभर्षि लक्ष्मण
क्व शिक्षितं क्षुद्रसहायचेष्टितम् ॥ ३ ॥

समेहि शत्रुघ्न समं सहोदरा-
वहं भवांश्चोभयतः समाहितौ ।
निमग्नमापज्जलधौ रघूद्वहं
प्रतूर्णमुद्धर्तुमिमं यतेवहि ॥ ४ ॥

विमार्गीताशास्त्वरया हरीश्वराः
सुदूरमुत्सर्पंतु वः स्फुटं यशः ।
व्रज प्रतिज्ञाम्बुधिपारमञ्जसा
किमार्य सुग्रीव मुधा विलम्बसे ॥ ५ ॥

गृहाद्विवासो वनवासयातना-
पराभवोऽयं दयितापहारजः ।
विपज्जलौघैः श्लथसेतुसन्निभः
कियद्भिरार्यो न विशीर्यतामयम् ॥ ६ ॥

सरिद्दरिद्राति शरत्समागमे
महासरः शुष्यति घर्मसम्पदि ।
स एति कालो न परं विलुप्यते
यदेतदार्यस्य विलोचनोदकम् ॥ ७ ॥

प्रियस्य सूनोर्न विलोकसे दशा-
मनाकुले कोसलराजनन्दिनि ।
असौ वनेऽस्मिन्बहुकष्टसङ्कटे
विवास्य पुत्रं दिवि सुस्थितः पिता ॥ ८ ॥

न यान्ति रत्नाकरसम्मुखापगा-
समानवेगाः प्रतिरोद्धुमापदः ।
उदीरयन्तीह विशिष्टमुद्गमं
गुणौघसङ्घर्षरसोद्धुरा इव ॥ ९ ॥

इहैव चित्रागुणबर्हिणः स्फुर-
न्त्युदीक्ष्यते रन्ध्रमिहैव नाण्वपि ।
इहैव दुर्वारमिदं कथं पुनः
महाविपद्व्यालवधूकदम्बकम् ॥ १० ॥

इतो महत्कष्टमिदं दुनोति मा-
ममी यदार्याकरशष्पलालिताः ।
परीत्य रुन्धन्ति तथैव नौ मुहुः
सहागताः पञ्चवटीकुरङ्गकाः ॥ ११ ॥

न याच्यसे भूरि वलीमुखेश्वर
प्रसीद सख्युः प्रथमोपकारिणः ।
सहायभावो निभृतक्षपाचर-
प्रवृत्तियात्रोपनयाद्विधीयताम् ॥ १२ ॥

उपेत्य वा यूयमनन्तरं दिशो
दशाननत्रासमपास्य शंसत ।
प्रवृत्तिमिष्टामधिदेवतामुखैः
स यातु निद्रामलसो वलीमुखः ॥ १३ ॥

महाब्धयो यान्ति निदाघतल्लतां
व्रजन्ति वल्मीकनिहीनतां नगाः ।
भजन्ति चिन्तामणयश्च लोष्टतां
जगत्यभाग्येन जनेन याचिताः ॥ १४ ॥

अकारणं सत्यमकारणं तपो
जगत्त्रयव्यापि यशोऽप्यकारणम् ।
अकारणं रूपमकारणं गुणाः
पुराणमेकं नृषु कर्मकारणम् ॥ १५ ॥

ज्वलन्ति दारीणि तपन्ति रात्रयो
रवेर्न कुर्वन्त्यवलोकमंशवः ।
वहन्ति नः कर्मविपाकचोदिताः
फलद्रुमा अप्यवकेशिनां व्रतम् ॥ १६ ॥

इदं जनन्या भरतस्य सूत्रितं
भवेदुत स्वन्तमनर्थनाटकम् ।
दशार्णवं घोरमिमं रघूद्वह-
स्तरेदथ प्राप्तहरीश्वरप्लवः ॥ १७ ॥

इतीरितान्तर्गतमन्युमश्रुणः
सृजन्तमच्छिन्नरयास्तरङ्गिणीः ।
ददर्श रामोऽनुजसंज्ञमन्तिका-
द्दर्पणस्थं प्रतिबिम्बमात्मनः ॥ १८ ॥

अथोदकक्लिन्नतलेन पाणिना
ममार्ज सास्रे नयने कनीयसः ।
जगाद चेदं वचनं स सान्त्वय-
न्कथञ्चिदाकुञ्चितवेदनारयः ॥ १९ ॥

त्वयापि चेल्लक्ष्मण धैर्यमुज्झितं
ममावलम्बं बत कः प्रदास्यति ।
प्रसीद निर्वाहय दीनमग्रजं
न शोकसिन्धौ तव मज्जनक्षणः ॥ २० ॥

तथा न तस्या मृगशावचक्षुषः
प्रवृत्तिलोपेन ममाधिरेधते ।
घनाश्रुमार्गोपहतानन्द्युतेः
यथैकचन्धोरवलोकनेन ते ॥ २१ ॥

अयं ककुप्सु प्रहिणोति यूथपान्
प्लवङ्गराजः पतिमोपनामिनः ।
प्रसीद निस्संशयमेष नन्दतु
प्रजावतीजीवितवार्तया भवान् ॥ २२ ॥

विभातसन्ध्येव कपीन्द्रवाहिनी
भिनत्तु किञ्चित्पुरतो घनं तमः ।
ततस्तवार्काभ्रकरैरिवाशुगैः
ममावलोकः प्रसभं करिष्यते ॥ २३ ॥

प्रमृज्यतामश्रु दृशोः प्रदृश्यता-
मिषोर्विशुद्धिः करयुग्मयोगिनः ।
रथो रुषामद्य चिरं निरुध्यतां
सुहृद्भिलम्बान्तरितो रणोत्सवः ॥ २४ ॥

उदीर्णकोपातपमेतदन्तिका-
द्विलोक्य बालार्कनिभं तवाननम् ।
विलीयतां रात्रिरिव द्विषामसौ
विसर्जिताहङ्कृतिचन्द्रिका चमूः ॥ २५ ॥

शृणोतु संवर्तकमेघमण्डली
परस्परास्फालननादमेदुरम् ।
स्ववीर्यगर्भस्तुतिवेगविह्वला
तवास्त्रविस्फारमरातिवाहिनी ॥ २६ ॥

जहीहि बाष्पं विशदोऽसि लक्ष्मण
क्षणाद्द्वयस्योऽप्युपयास्यतीव सः ।
निमित्तपुष्पाणि वदन्त्यमूनि नौ
मनोरथानामविलम्बितं फलम् ॥ २७ ॥

स्फुरन्नसव्यस्य ममैष चक्षुषः
पुटः स्फुटं दर्शयति प्रियागमम् ।
अयं चिराच्चान्द्रमसेन वर्त्मना
वहन् वियोगान्तमिवाह मारुतः ॥ २८ ॥

दिगङ्गनानां गगनाङ्गणस्य च
प्रसादसंवादि यथाद्य मे मनः ।
तथावगच्छामि गता इव क्षयं
दशाविसंवाददुरन्तवासराः ॥ २९ ॥

अयं वहत्याहतपुष्पसौरभो
वनानिलः प्राणसमाङ्गशीतलः ।
असौ सुहृत्केलिविवादकोमलः
करोति रूढोऽपि न खेदमातपः ॥ ३० ॥

इयं रसत्यद्य शिवाऽशिवाकृति-
र्व्यनक्ति वामेन वयस्य सङ्गमम् ।
ललत्ययं लक्ष्मण दक्षिणेन मे
शुभानि शंसन्पृषतः प्रियासखः ॥ ३१ ॥

तताग्रपक्षो मम पक्षसम्पदं
चकास्ति चाषः पुरतो वदन्निव ।
अयं च नस्सिद्धमिवाभिकांक्षितं
क्षमारुहि क्षीरिणि वक्ति वायसः ॥ ३२ ॥

हरन्त्यमी कुड्मलशालिनो नगाः
समृद्धकल्पा इव नो मनोरथाः ।
स्थिताः पुरः स्पष्टममूः फलानत-
प्रताननीपङ्क्तिनिभाश्च सिद्धयः ॥ ३३ ॥

इति ब्रुवाणस्य गिरं जगद्गुरो
रुदारघण्टादिघनप्रभेदभूः ।
ध्वनिर्दवीयानवधानलक्षित-
श्चकार तारल्यकमन्तरात्मनि ॥ ३४ ॥

विभक्तसामन्तसमूहलाञ्छन-
ततश्चिराच्छेदतरङ्गमूर्छितः ।
प्रकृष्टतूर्यत्रिकयोनिरुद्धभौ
विजृम्भिताद्रिग्रहगौरवो रवः ॥ ३५ ॥

तिरोऽभवज्जर्जरझल्लरीरवैः
महीभृतां निर्झरझात्क्रियारवः ।
मृगव्रजानां विततान विद्रवं
सविभ्रमो डिण्डिमडुम्बिडम्बरः ॥ ३६ ॥

विनिच्यते स्म प्रततप्रतिस्वनः
स्वनोऽवनद्धप्रभवः पृथग्विधः ।
ध्वनिर्भृशं व्यक्तिमियाय काम्बवः
क्रमेण वेणोरपि शुश्रुवे रवः ॥ ३७ ॥

प्रवालशङ्खस्तनिते समन्ततः
शकुन्तिकोलाहलमस्तमैयत ।
मतङ्गजानामवलेपगर्जितं
ममज्ज मन्द्रे मणिजन्मनि ध्वनौ ॥ ३८ ॥

ममौ मयूरीमदनादमांसलो
न मर्दलानां ध्वनिरद्रिकुक्षिषु ।
न कुक्कुमौघ क्वणितोर्मयः श्रियं
हुडुक्कहिक्कालहरीषु लेभिरे ॥ ३९ ॥

सगोमुखक्वाणतरङ्गसंहति-
श्चिरं निनादोऽनुनाद पाणवः ।
स्थलीषु निर्घृष्टचलासु पार्ष्णिभि-
श्चकाशिरे केऽपि न पादपाणवः ॥ ४० ॥

चचाल वाचालमहीधरा मही
वितेनिरे खं ह्रदपङ्करेणवः ।
जहुस्तरूणां भयलोलदृष्टयः
करार्धकृष्टं विटपं करेणवः ॥ ४१ ॥

बभुर्ध्वजाः सांशुकरत्नपल्लवाः
ककुप्सु कल्पोपपदद्रुचारवः ।
सहोदभूद्भानुगभस्तिभिन्नया
मुखोद्भवो मौलिद्दषद्रुचा रवः ॥ ४२ ॥

विविक्तचित्रांशुकचिह्नपालयः
प्रकाशवालव्यजनव्रजश्रियः ।
शिखिच्छदच्छत्रकचन्द्रकप्रभा-
वितानचित्राः ककुभश्चकाशिरे ॥ ४३ ॥

समं विशश्राम विमुक्तवीवधा
पुरः परिस्कन्दवलीमुखावलिः ।
चिरान्मृदूभावमियाय वाहिनी-
निवेशजन्मा तुमुलो मुखारवः ॥ ४४ ॥

क्षणं मिथः केलिरियं निवार्यतां
निगृह्यतामेष च तूर्यडम्बरः ।
अयं स देवो विनयादुपास्यता-
मिति श्रुताऽऽसीत्कपिराजघोषणा ॥ ४५ ॥

ततश्च तौ पूर्णमनोरथाविव
प्रसस्रतुः प्रस्रवणस्थलीमनु ।
प्लवङ्गराजध्वजिनीविनिश्चया-
न्मिथस्समुद्भूतसभाजनत्वरौ ॥ ४६ ॥

गतस्य तस्याथ सहानुजन्मना
नवोपलच्छन्नतलां वनस्थलीम् ।
बभूव सेवादरदूरबन्धुरः
पुरो हनूमान्प्रभुकार्यकोविदः ॥ ४७ ॥

गीर्भिः समुल्लसितसम्भ्रमगद्गदाभिः
सम्भाष्य तं विरचिताञ्जलिमाञ्जनेयम् ।
रामः प्रमोदतरलः सुहृदस्तदानी-
मभ्युद्गमाय सहसानुजमादिदेश ॥ ४८ ॥

इत्यभिनन्दकृतौ रामचरिते महाकाव्ये
चतुर्थः सर्गः

ಟಿಪ್ಪಣಿಗಳು :

रामवैशसः—ರಾಮನ ದುಃಖವುಳ್ಳವನಾಗಿ रयम्—ವೇಗವನ್ನು
नभोनभस्यौ—ಶ್ರಾವಣ ಭಾದ್ರಪದ ಮಾಸಗಳು
नियति—ಅದೃಷ್ಟ, ವಿಧಿ "भाग्यं स्त्री नियतिर्विधिः"—ಅಮರ
असून्—ಪ್ರಾಣಗಳನ್ನು–ನಿತ್ಯ ಬಹುವಚನ "पुंसि भूम्न्यसवः प्राणाः"—ಅಮರ
मृद्नन्—ತುಳಿಯುತ್ತಾ
प्रतूर्ण—ಬೇಗನೆ
विमार्गताशाः—ದಿಕ್ಕುಗಳಲ್ಲಿ ಹುಡುಕಿದ, विमार्गित—ಇರಬಹುದು अञ्जसा—ಒಡನೆ, ಬೇಗ
पराभवः—ಅಪಮಾನ
दरिद्राति दरिद्रतः दरिद्रति ಎಂಬುದು ಪ್ರ. ಪು. ಕ್ರಿಯಾರೂಪ
विवास्य—ವನಕ್ಕೆ ಅಟ್ಟಿ
गुणबर्हिणः—ಗುಣಗಳೆಂಬ ನವಿಲಿನ "मयूरो बर्हिणो बर्ही" ಅಮರ
व्यालवधू—ಸರ್ಪಿಣಿ, ಹೆಣ್ಣುಸರ್ಪ
दुनोति—ಸಂಕಟಪಡಿಸುತ್ತಿದೆ
शष्पलालिताः—ಹುಲ್ಲುಗರಿಕೆ ನೀಡಿ ಪಾಲಿಸಲ್ಪಟ್ಟ
वलीमुखेश्वर—ಕಪಿರಾಜ–ಸುಗ್ರೀವ. प्रवृत्तिः—ಸಮಾಚಾರ "वार्ता प्रवृत्तिर्वृत्तान्तः" ಅಮ

अलसः—ಸೋಮಾರಿಯಾದ
निदाघतप्तताम्—ಉರಿಬೇಸಗೆಯಿಂದ ಒತ್ತುವಿಕೆಯನ್ನು लोष्टताम्—ಶಿಲಾತ್ವವನ್ನು
अंशवः—ಕಿರಣಗಳು अवकेशी—ಹಣ್ಣು ಬಿಡದ ಹೆಮ್ಮರ
वन्ध्ये फलेऽवकेशी स्यात् ಅಮರ
दशार्णवम्—ದುರವಸ್ಥೆಯೆಂಬ ಸಾಗರವನ್ನು प्लवः—ತೆಪ್ಪ
अन्तर्गतमन्युम्—ತಡೆಹಿಡಿದ ದುಃಖವುಳ್ಳ
उदकक्लिन्नतलेन—ನೀರಿನಿಂದ ತೊಯ್ದ ಅಂಗೈಯುಳ್ಳ
मज्जनक्षणः—ಮುಳುಗುವ ವೇಳೆ
ककुप्सु—ದಿಕ್ಕುಗಳಲ್ಲಿ प्रजावती—ಅತ್ತಿಗೆ प्रजावती भ्रातृजाया ಅಮರ
आशुगैः—ಬಾಣಗಳಿಂದ
असव्यस्य—ಬಲಭಾಗದ सव्य—ಎಡ
शिवा—ಹೆಣ್ಣು ನರಿ अशिवाकृतिः—ಭಯಂಕರವಾದ अ-शिव-आकृतिः
चापः—ಒಂದು ಜಾತಿಯ ಪಕ್ಷಿ क्षीरिणि क्षमारुहि—ಆಲದ ಮರದಲ್ಲಿ
जर्जरझल्लरी—ಕಾಂಸ್ಯತಾಳ डिण्डिमडुम्बिडम्बरः—ಡಿಂಡಿಮದ ಧ್ವನಿ
प्रतिस्वनः—ಪ್ರತಿಧ್ವನಿ काम्बवः—ಶಂಖದಿಂದ ಜನಿಸಿದ
हुहुक्कहिक्कालहरीषु—ಕೇಕೆಯ ನಾನಾವಿಧವಾದ ಧ್ವನಿಗಳಲ್ಲಿ
वाहिनीनिवेशजन्मा—ಸೇನೆಯನ್ನು ಸಜ್ಜುಗೊಳಿಸುವುದರಿಂದ ಉಂಟಾದ

### ಅಭ್ಯಾಸ—ಪ್ರಶ್ನೆಗಳು

1. ರಾಮನಿಗೆ ಒದಗಿದ ವಿಪತ್ತಿಗಾಗಿ ಲಕ್ಷ್ಮಣನು ಹೇಗೆ ಮರುಗಿದನು ?
2. ಸಂಕಟಪಡುತ್ತಿದ್ದ ಲಕ್ಷ್ಮಣನನ್ನು ರಾಮನು ಹೇಗೆ ಸಮಾಧಾನಪಡಿಸಿದನು ? ಅವನು ಕೊಟ್ಟ ಕಾರಣಗಳೇನು ?
3. ಸುಗ್ರೀವನು ರಾಮನ ಬಳಿ ಬರುತ್ತಿರುವುದನ್ನು ಯಾವ ಧ್ವನಿಯು ಸೂಚಿಸಿತು ? ಅದನ್ನು ಕವಿ ಹೇಗೆ ವರ್ಣಿಸಿದ್ದಾನೆ ?

## (ಆ) ಯಾದವಾಭ್ಯುದಯಂ

### ದ್ವಿತೀಯಃಸರ್ಗಃ

ವೇಂಕಟನಾಥರು 13ನೆಯ ಶತಮಾನದ ಅಂತ್ಯದಲ್ಲಿ ಅವತರಿಸಿದ ಮಹಾತ್ಮರು. ವಿಶಿಷ್ಟಾದ್ವೈತ ಸಿದ್ಧಾಂತವನ್ನು ಬೆಳಗಿಸಿದ ವಿಭೂತಿಪುರುಷರು. ಸರ್ವತಂತ್ರಸ್ವತಂತ್ರ, ಕವಿತಾರ್ಕಿಕ ಸಿಂಹ,

ಘಂಟಾವತಾರರೆಂದೇ ಇವರಿಗೆ ಪ್ರಸಿದ್ಧಿಯುಂಟು. ಸ್ವತಃ ಅವರೇ ಸಂಕಲ್ಪ ಸೂರ್ಯೋದಯ
ತ ಮಾತನ್ನು ನುಡಿದಿದ್ದಾರೆ. ಬಹುವಿಧವಾದ ಗ್ರಂಥಗಳನ್ನು ಬಹುಭಾಷೆಗಳಲ್ಲಿ ನಿರ್ಮಿ
ವುದು ಇವರ ವಿದ್ವತ್ತಿಗೆ ಸಾಕ್ಷಿಯಾಗಿದೆ. ಪ್ರಾಕೃತ, ತಮಿಳು ಭಾಷೆಗಳಲ್ಲೂ ಇವರ ಗ್ರಂ
ಗಳುಂಟು. ವೇದಾಂತವಿಚಾರಗಳನ್ನು ಜನಸಾಮಾನ್ಯರಿಗೂ ಅರಿವಾಗುವಂತೆ ದೇಶಭಾಷೆಯ
ಪ್ರಚುರಪಡಿಸಿದ ಶ್ರೇಯಸ್ಸು ಇವರಿಗೆ ಸಲ್ಲುತ್ತದೆ. ಅಸಾಧಾರಣವಾದ ಪಾಂಡಿತ್ಯ, ಗಂಭೀ
ವಾದ ವಾದಸರಣಿ, ಗಾಢವಾದ ಭಕ್ತಿ, ವೈರಾಗ್ಯ, ಸರಳಜೀವನ ಇವುಗಳಿಗೆ ಆಚಾರ್ಯ
ಹೆಸರಾದವರು. ಅವರು ತಮ್ಮ ಇಪ್ಪತ್ತನೆಯ ವಯಸ್ಸಿನಲ್ಲಿಯೇ ಸಕಲ ವಿದ್ಯಾಪಾರಂಗತರಾ
ದ್ದರು ಎಂಬುದನ್ನು ವಿಶಂತ್ಯಬ್ದೇ ವಿಶ್ರುತನಾನಾವಿದ್ಯಃ ಎಂಬ ಅವರ ಮಾತೇ ತೋರಿಸುತ್ತ
ಇವರು 100ಕ್ಕೂ ಹೆಚ್ಚು ಗ್ರಂಥಗಳನ್ನು ರಚಿಸಿದ್ದಾರೆ. ಪ್ರಕೃತ ಯಾದವಾಭ್ಯುದಯ
ರಘುವಂಶದ ಮೇಲು ಪಂಕ್ತಿಯಲ್ಲಿ ಬರೆದಿರುವ ಕಾವ್ಯ, ಕೃಷ್ಣಚರಿತೆ ಇದರ ವಸ್ತು. ಪ್ರಕೃ
ಭಾಗವು ಆ ಕಾವ್ಯದ 2ನೆಯ ಸರ್ಗದಿಂದ ಆರಿಸಿದುದು.

**ಪೂರ್ವ ಕಥೆ**

ಭೂಭಾರ ಹರಣಕ್ಕಾಗಿ ನಾರಾಯಣನು ದೇವಕಿಯ ಎಂಟನೆಯ ಗರ್ಭವನ್ನು ಪ್ರವೇ
ಸಿದ್ದಾನೆ. ದೇವಕಿಗೆ ನವಮಾಸಗಳೂ ತುಂಬಿವೆ. ಅಂದಿನ ಇರುಳು ಆಕೆಗೆ ಪ್ರಸವವಾ
ಬೇಕು. ಅಂದಿನ ಸಂಜೆ ರಾತ್ರಿಗಳ ವರ್ಣನೆಯಿಂದ ಕಥೆಯು ಪ್ರಸ್ತುತವಾಗಿದೆ ಯಾದವಾಭ್ಯು
ದಯದ ಎರಡನೇ ಸರ್ಗ ಮೂವತ್ತೆಳನೇ ಪದ್ಯದಿಂದ ಈ ಭಾಗವನ್ನು ಪ್ರಾರಂಭಿಸಲಾಗಿದೆ.

# यादवाभ्युदयम्

## द्वितीयः सर्गः—श्री कृष्णावतार वर्णनम्

तापोपशान्ति जगतां दिशन्ती
सन्ध्याऽपरा साधुजनप्रतीक्ष्या ।
तामीदृशीं विश्वपितुः प्रसूतिं
संवेदयन्तीव समाजगाम ॥ १ ॥

सुवर्णपीताम्बरवासिनी सा
स्वधामसञ्छादितसूर्यदीप्तिः ।

उपासनीया जगतां बभासे
मुरद्विषो मूर्तिरिव द्वितीया ॥ २ ॥

प्रसक्तपातश्चरमाम्बुराशौ
रक्तोरुबिम्बो रविरस्तशैलात् ।
दिनान्तनागेन दृढप्रणुन्नं
मनश्शिलाशृङ्गमिवाबभासे ॥ ३ ॥

निमज्जता वारिनिधौ सवित्रा
को नाम जायेत करग्रहीता ।
तदेति सम्भावनयैव नूनं
दूरादुदक्षेपि कराग्रमुच्चैः ॥ ४ ॥

स्फुरत्प्रभाकेसरमर्कबिम्बं
ममज्ज सिन्धौ मकरन्दताम्रम् ।
सन्ध्याकुमार्या गगनाम्बुराशेः
क्रीडाहृतं क्षिप्तमिवारविन्दम् ॥ ५ ॥

फणामणिप्रेक्ष्यखरांशुबिम्बः
सन्ध्यासुपर्णीमवलोक्य भीतः ।
तापाधिको वासरपन्नगेन्द्रः
प्रायेण पातालबिलं विवेश ॥ ६ ॥

प्रदोषरागारुणसूर्यलक्षा-
द्दिशागजो दृप्त इवातिघोरः ।
कालोपनीतं मधुना समेतं
मन्ये पयोधिः कबलं न्यभुङ्क्त ॥ ७ ॥

तदा तमः प्रोषितचन्द्रसूर्ये
दोषामुखे दूषितसर्वनेत्रम् ।
वियोगिनां शोकमयस्य वह्ने-
राशागतो धूम इवान्वभावि ॥ ८ ॥

सतारपुष्पा धृतपल्लवश्रीः
प्रच्छायनीरन्ध्रतमःप्रताना ।
विश्वाभिनन्द्या ववृधे तदानीं
वैहायसी कापि वसन्तवन्या ॥ ९ ॥

अलक्ष्यत श्यामलमन्तरिक्षं
ताराभिरादर्शितमौक्तिकौघम् ।
निवत्स्यतो विश्वपतेरवन्यां
कालेन भृत्येन कृतं वितानम् ॥ १० ॥

अभृङ्गनादप्रतिपन्नमौना
निमेषभाजो नियतं वनस्थाः ।
दूरं गते स्वामिनि पुष्करिण्य-
स्तत्प्राप्तिलाभाय तपो वितेनुः ॥ ११ ॥

निमीलितानां कमलोत्पलानां
निष्पन्नसख्यैरिव चक्रवाकैः ।
विमुक्तभोगैर्विदधे विषण्णै-
र्विबोधवेलावधिको विलापः ॥ १२ ॥

तमिस्रनीलाम्बरसंवृताङ्गी
श्यामा बभौ किञ्चिदतीत्य सन्ध्याम् ।

प्राचीनशैले समयान्निगूढं
समुद्यता चन्द्रमिवाभिसर्तुम् ॥ १३ ॥

निशाकरेण प्रतिपन्नसत्त्वा
निक्षिप्तदेहेव पयोधितल्पे ।
जगत्समीक्ष्या जहती च कार्श्यं
प्राची दिशा पाण्डरतामयासीत् ॥ १४ ॥

तमः प्रसङ्गेन विमुच्यमाना
गौरप्रभा गोत्रभिदाभिनन्द्या ।
विधूदयारम्भविशेषदृश्या
प्राचीदिशाऽभासत देवकीव ॥ १५ ॥

अपत्यलाभं यदुवीरपत्न्याः
महोदधौ मग्नसमुत्थितेन ।
तद्वंशमान्येन समीक्ष्य पूर्वं
प्राप्तं प्रतीतेन पुरोधसेव ॥ १६ ॥

क्ष्वेलोपमे सन्तमसे निरस्ते
सोमं सुधास्तोममिवोद्वमन्ती ।
दुग्धोदवेलेव दुदोह लक्ष्मी-
माशा मनोज्ञाममरेन्द्रमान्या ॥ १७ ॥

तमस्समाक्रान्तिवशेन पूर्वं
जज्ञे निमग्नैरिव भूतधात्र्याम् ।
ततस्तुषारांशुकरावगूढै-
रुत्तभ्यमानैरिव शैलशृङ्गैः ॥ १८ ॥

दिशस्तदानीमवनीधराणां
सगैरिकैः पारदपङ्कलेपैः ।
चकाशिरे चन्द्रमसो मयूखैः
पञ्चायुधस्येव शरैः प्रदीप्तैः ॥ १९ ॥

समुन्नमन्ती कुटिलायतात्मा
शशाङ्कलेखोदयदृश्यकोटिः ।
वियोगिचेतोलवने प्रवीणा
कामोद्यता काञ्चनशङ्कुलेव ॥ २० ॥

तमांसि दुर्वारबलस्सकालः
प्रायो विलोप्तुं सहसा दिशां च ।
मनांसि कामश्च मनस्विनीनां
प्रायुंक्त शैत्याधिकमर्धचन्द्रम् ॥ २१ ॥

करेण सङ्कोचितपुष्करेण
मदप्रतिच्छन्दकलङ्कभूमा ।
क्षिप्त्वा तमश्शैवलमुन्ममज्ज
मग्नो दिशानाग इवेन्दुरब्धेः ॥ २२ ॥

मदोदयाताम्रकपोलभासा
शक्रस्य काष्ठा शशिना चकासे ।
उदेयुषा व्यञ्जयितुं त्रिलोकीं
नाथस्य सा नाभिरिवाम्बुजेन ॥ २३ ॥

समीपतस्सन्तमसाम्बुराशेः
बभार शङ्खाकृतिरिन्दुबिम्बः ।

पित्तोपरागादिव पीतिमानं
दोषाविलप्रोषितदृष्टिदत्तात् ॥ २४ ॥

कृशोदरीलोचनकृष्णलक्ष्मा
रात्र्या समिद्धोदयराग इन्दुः ।
कस्तूरिकाकुङ्कुमचित्रितात्मा
कर्पूरविन्यास इवान्वभावि ॥ २५ ॥

प्रसादमन्तःकरणस्य दाता
प्रत्यक्षयन्विश्वमिदं प्रकाशैः ।
तमश्च रागं च विधूय चन्द्रः
सम्मोदनं सत्वमिवोल्ललास ॥ २६ ॥

निशाकरो वारिनिधिरवनानां
निष्पादकः कुन्दरुचिश्चकाशे ।
उदेष्यतश्चक्रभृतो नियोगात्
प्रादुर्भवन् प्रागिव पाञ्चजन्यः ॥ २७ ॥

मृगेणनिष्पन्नमृगाजिनश्री
स्वपादविक्षेपमितान्तरिक्षः ।
मुरद्विषो वामनमूर्तिभाजः
पर्यायतामन्वगमच्छशाङ्कः ॥ २८ ॥

जिगाय शङ्काश्रितशैवलाभः
चारुद्युतेश्चन्द्रमसः कलङ्कः ।
उदीयमानस्य महोर्मियोगात्
सामिच्युतं सागरमूलपङ्कम् ॥ २९ ॥

उदेत्य तुङ्गादुदयाद्रिशृङ्गात्
तमोगजानग्रकरेण निघ्नन् ।
निशाकरस्तन्मदलेपलक्ष्मा
सिताभिशुः सिंहदशामयासीत् ॥ ३० ॥

निशीथलक्ष्म्या इव पुण्डरीकं
निर्वेशसिन्धोरिव फेनचक्रम् ।
तमन्ववैक्षन्त विलासतन्त्राः
ताराभणीनामिव सूतिशुक्तिम् ॥ ३१ ॥

उदारतारागणबुद् बुदौघः
चन्द्रेण सम्पन्नसुधाप्रसूतिः ।
अशेषदृश्यामधिगम्यलक्ष्मीं
आलोकदुग्धोदधिराबभासे ॥ ३२ ॥

प्रकाशयन्विश्वमिदं यथावत्
चन्द्रोदयोद्दीपितसौम्यतारः ।
दैवान्निशीथो जगतः प्रभूता-
दासीदिवान्धस्य सदृष्टिलाभः ॥ ३३ ॥

विशोधितात् सागरवृद्धिहेतोः
विष्वङ्मुखी विष्णुपदात् सरन्ती ।
तमोमयीं सूर्यसुतां निगीर्य
ज्योत्स्नानदी शोणमपि व्यमुञ्चत् ॥ ३४ ॥

प्रियामुखैः तोयमधु प्रविष्टं
पीत्वा नवं प्रीत इवाम्बुराशिः ।

समेत्य चन्द्रद्युतिनर्तकीभिः
तरङ्गितं ताण्डवमाततान ॥ ३५ ॥

कलङ्कचित्रीकृतमाबभासे
तमस्समध्यासित सत्त्वकल्पम् ।
अशुष्कशैवालमिवार्धदृश्यं
सिद्धापगासैकतमिन्दुखण्डम् ॥ ३६ ॥

स्वमध्यसम्पन्नविशुद्धधामा
श्यामा च सा देवकनन्दनी च ।
तमः क्षिपन्त्यौ जगतां त्रयाणां
अन्योन्यसंवादमिवान्वभूताम् ॥३७ ॥

शाखावकाशेषु कृतप्रवेशैः
चन्द्रातपैराश्रितचारकृत्यैः ।
हतावशिष्टानि तमांसि हन्तुं
स्थानं तदाक्रान्तममृग्यतेव ॥ ३८ ॥

पराकृतध्वान्तनिकायपङ्कैः
पर्याप्ततारागणफेनपुञ्जैः ।
यशःप्रवाहैरिव चन्द्रपादैः
अशोभत द्यौरसमायुधस्य ॥ ३९ ॥

ददानया दिक्सरितां प्रसादं
प्रसक्तहंसागमया स्वकान्त्या ।
अपाकृतध्वान्तघनप्रवृत्या
शरत्त्विषा चन्द्रिकया बभासे ॥ ४० ॥

कलावता कामविहारनाट्ये
कालोचितं कल्पयतेव नर्म ।
अमोघमायापलितंकरण्यः
प्रायो दिशां दीधितयः प्रयुक्ताः ॥ ४१ ॥

कदम्बमालाभिरधीतलास्यः
कल्याणसम्भूतिरभूत्प्रजानाम् ।
प्रियोदयस्फीतरुचो रजन्याः
सन्तोषनिःश्वासनिभस्समीरः ॥ ४२ ॥

प्रायेण हंसैरवधूतसङ्गा
चारुस्मिता सम्भृतभृङ्गनादा ।
सर्वोपभोग्ये समये प्रसुप्तं
कुमुद्वती कोकनदं जहास ॥ ४३ ॥

कलङ्कलक्षेण समैक्षि काचित्
कस्तूरिकापत्रविशेषकान्तिः ।
सुधांशुबिम्बव्यपदेशदृश्ये
मुग्धे रजन्या मुखपुण्डरीके ॥ ४४ ॥

तलेष्ववेपन्त महीरुहाणां
छायास्तदा मारुतकम्पितानाम् ।
शशाङ्कसिंहेन तमोगजानां
लूनाकृतीनामिव गात्रखण्डाः ॥ ४५ ॥

तमस्तरङ्गानवसादयन्त्या
समेयुषी चन्द्रिकया महत्या ।

श्यामा बभौ सान्द्रनवोत्पलश्रीः
सुरस्रवन्त्येव कलिन्दकन्या ॥ ४६ ॥

स्वविप्रयोगव्यसनात्सुधांशुः
भृङ्गापदेशेन कुमुद्वतीभिः ।
प्रच्यावयामास विषं निपीतं
सुधाभिराप्लाव्य करस्थिताभिः ॥ ४७ ॥

चकाशिरे पत्रकलासमृद्ध्या
व्योमोपमे वारिणि कैरवाणि ।
कलङ्कदृश्यभ्रमराणि काले
नाथेन साधर्म्यमुपागतानि ॥ ४८ ॥

सरिन्मुखोपाहृतमम्बुराशिः
पीत्वेव तोयं मधु जातहर्षः ।
चकार चन्द्रप्रतियातनानां
करग्रहैः कामपि रासलीलाम् ॥ ४९ ॥

प्रसादभाजोरुभयोरभूताम्
उभावनिर्धार्यमिथोविशेषौ ।
नभःस्थले शीतरुचिस्सतारे
सकैरवे तत्प्रतिमा च तोये ॥ ५० ॥

नभस्तुषारांशुमयूखयोगात्
तमिस्रया मोक्षमविद्ययेव ।
अतृष्यतस्तत्त्वविदो निशायाम्
अन्तर्मुखं चित्तमिवात्मयोगात् ॥ ५१ ॥

सहोदिता चन्द्रमसा बभासे

ज्योत्स्ना पयोधेरुपजातरागा ।
तदातने सञ्जननेऽपि शौरेः
सहायिनी सागरसम्भवेव ॥ ५२ ॥

प्रबुद्धताराकुमुदाभिचन्द्रे
निश्शेषनिद्राणजने निशीथे ।
न तादृशो देवपतेःप्रसूतिं
पुष्यन्बभौ पुण्यतमो मुहूर्तः ॥ ५३ ॥

भागेन पूर्वेण तमोमयेन
प्रकाशपूर्णेन च पश्चिमेन ।
तदा निशीथस्स सतां प्रसत्त्यै
संसारमुक्त्योरिव सन्धिरासीत् ॥ ५४ ॥

प्रागेव जातेन सितेन धाम्ना
मध्योपलक्ष्येण च माधवेन ।
प्रकामपुण्या वसुदेवपत्न्या
सम्पन्नसाम्येव निशा बभासे ॥ ५५ ॥

सहप्रतिच्छन्दशशाङ्कभेदैः
सरस्वतां ताण्डविनस्तरङ्गाः ।
अवेक्ष्य शौरेरवतारवेलां
सन्तोषनिघ्ना इव संप्रणेदुः ॥ ५६ ॥

अवादितोदीरितवाद्यघोषम्
दिशाभिराम्रेडितदिव्यगीतम् ।

सतामुपस्थापितसत्त्वलास्यं
सङ्गीतमाङ्गल्यमभूत्तदानीम् ॥ ५७ ॥

प्रदीपितैः कंसगृहेषु दीपैः
तापैश्च भावेषु तपोधनानाम् ।
अलभ्यत क्षिप्रमलब्धभङ्गैः
अहेतुनिर्वाणदशानुभूतिः ॥ ५८ ॥

अजस्स्वजन्मार्हतयानुमेने
यामष्टमीं यादवभावमिच्छन् ।
द्वितीयया भावितयोगनिद्रा
साभूत्तदानीं प्रथमा तिथीनाम् ॥ ५९ ॥

अथ सितरुचिलग्ने सिद्धपञ्चग्रहोच्चे
व्यजनयदनघानां वैजयन्त्यां जयन्त्याम् ।
अखिलभुवनपद्मक्लेशनिद्रापनुत्त्यै
दिनकरमनपायं देवकीपूर्वसन्ध्या ॥ ६० ॥

अवतरति मुकुन्दे सम्पदामेककन्दे
सुरभितहरिदन्तां स्वादुमाध्वीकदिग्धाम् ।
अभजत वसुदेवस्थानमानन्दनिघ्नैः
अमरमिथुनहस्तैराहितां पुष्पवृष्टिम् ॥ ६१ ॥

इति श्रीमत्कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य कृतिषु
यादवाभ्युदये काव्यरत्ने
श्रीकृष्णावतारवर्णनं
नाम द्वितीयः सर्गः

ಟಿಪ್ಪಣಿಗಳು :

साधुजन--प्रतीक्ष्या—ಸಂಧ್ಯಾದಿ ಕರ್ಮಗಳಿಗಾಗಿ ಸಜ್ಜನರಿಂದ ಎದುರು ನೋಡಲ್ಪಟ್ಟ

सुवर्णपीताम्बरवासिनी—ದೇವಕೀ ಮತ್ತು ಸಂಧ್ಯೆ ಎರಡಕ್ಕೂ ವಿಶೇಷಣ. ಸಂಜೆಗೆಂಪಿನಿಂದ ಆವೃತವಾದ ಚಿನ್ನದಂತೆ ಹಳದಿ ಬಣ್ಣದ ವಸ್ತ್ರಧಾರಿಣಿಯಾದ

स्वधाम्ना—ತನ್ನ ತೇಜಸ್ಸಿನಿಂದ. ಉತ್ಪ್ರೇಕ್ಷಾಲಂಕಾರ

अस्तशैलात्—ಅಸ್ತಾದ್ರಿಯಿಂದ "अस्तस्तु चरमक्ष्माभृत्" ಅಮರ

मनश्शिलाशृङ्गम्—ಗೈರಿಕಶಿಖರ

दूरात् उदक्षेपि—"दूरान्तिकार्थेभ्यो द्वितीया च ಎಂಬುದರಿಂದ ಪ್ರಾತಿಪದಿಕಾರ್ಥ ಮಾತ್ರದಲ್ಲಿ ಪಂಚಮೀ

स्फुरन्तः प्रभाकेसराः यस्य—ಅರವಿಂದ ಪಕ್ಷದಲ್ಲಿ स्फुरन्तः प्रभासदृशाः केसराः यस्य ಎಂದು ವಿಗ್ರಹವಾಕ್ಯ

खरांशु—ಸೂರ್ಯ सुपर्णी—ಗರುಡನ ತಾಯಿ

दोषमुखे—ರಾತ್ರಿಯ ಆರಂಭದಲ್ಲಿ

तारा एव पुष्पाणि तै सह वर्तत इतिः सतारपुष्पा छायानां समृद्धिः—प्रच्छायम् ಅವ್ಯಯೀಭಾವ

वितानं—ನಡು ಚಪ್ಪರ

निमेषभाजः—ಮೊಗ್ಗಾದ, ಧ್ಯಾನ ಮಗ್ನವಾದ

विमुक्तभोग्यैः—ಸ್ತ್ರೀ ಕಾಮನೆಯನ್ನು ತೊರೆದ

तमिस्रमेव नीलाम्बरं तेन संवृतं अङ्गं यस्याः सा तमिस्र नीलाम्बर संवृताङ्गी

श्यामा—निशा सैव श्यामा युवतिः

प्रतिपन्नसत्त्वा—ಗರ್ಭತಾಳಿದ पाण्डरताम्—ಬಿಳುಪನ್ನು

तमः प्रसङ्गेन—ಕತ್ತಲ ಸಂಪರ್ಕದಿಂದ, ತಮೋಗುಣ ಸಂಪರ್ಕದಿಂದ गोत्रभिदा—ಇಂದ್ರನಿಂದ

विधुः—ಚಂದ್ರ, ಕೃಷ್ಣ विधुः शशाङ्के कर्पूरे हृषीकेशे च राक्षसे ವಿಶ್ವಕೋಶ

यदुवंश्येषु वीरः तस्य पत्नी तस्याः—यदुवीरपत्न्या वीर—श्रेष्ठः
"वीरस्तु सुभगे श्रेष्ठे" ವಿಶ್ವಕೋಶ प्रतीतेन—ಆದರ ತುಂಬಿದ
प्रतीतः सादरे ख्याते ವಿಶ್ವಕೋಶ

क्ष्वेलोपमे—ವಿಷಸಮಾನವಾದ दुग्धोदवेलेव—ಕ್ಷೀರಸಮುದ್ರದ ಪ್ರವಾಹದಂತೆ
"वेला तीरांबुवृद्धयोः" ರತ್ನಮಾಲಾಕೋಶ

भूतधात्र्याम्—ಭೂಮಿಯಲ್ಲಿ

कुटिलायतात्मा—ವಕ್ರದೀರ್ಘಾಕಾರವುಳ್ಳ लवनम्—ಕತ್ತರಿಸುವಿಕೆ

विलोप्तुम्—ನಾಶಪಡಿಸಲು  अर्धचन्द्रम्—ಚಂದ್ರನ ಅರ್ಧಭಾಗ, ಒಂದು ಬಗೆಯ ಬಾಣ
"अर्धचन्द्रस्तु चन्द्रके, गलहस्ते बाणभेदे" ಎಂದು ವಿಶ್ವಕೋಶ
भूमा—ಬಾಹುಳ್ಯ, सङ्कोचित पुष्करेण—ಮೊಗ್ಗಾಗಿಸಲ್ಪಟ್ಟ ಕಮಲಗಳುಳ್ಳ, ಮೊಟಕಾಗಿಸಲ್ಪಟ್ಟ ಸೊಂಡಿಲುಳ್ಳ "पुष्करं करिहस्ताग्रे" ಅಮರ
काष्ठा—ದಿಕ್ಕು
प्रोषितानाम्—ಪ್ರವಾಸಿಗರ  पित्तोपरागात्—ಪಿತ್ತದೋಷದಿಂದ
समिद्धोदयरागः—ಕಾಂತಿಯುಕ್ತವಾದ ಉದಯರಾಗವುಳ್ಳ
विधूय—ತೊರೆದು, ಕೊಡಹಿ
पर्याप्तताम्—ಸಾದೃಶ್ಯವನ್ನು
शंखं आश्रितस्य शैवलस्य आभा यस्य सः शंखश्रित शैवलाभः
चारुमूर्ते—ಸುಂದರ ಕಾಂತಿಯುಳ್ಳ
उदेत्य—ಹೊರಬಂದು  तेषां मदस्य लेपः इव लक्ष्म यस्य सः—तन्मदलेपलक्ष्मा
विलासः तन्त्रं प्रधानं येषां ते विलासतन्त्राः  तन्त्रम्—ಮುಖ್ಯ

"तन्त्रं स्वराष्ट्रव्यापारे तन्तुवाये परिच्छेदे ।
शास्त्रे प्रधाने सिद्धान्ते प्रयोगेऽध्वरकर्मणाम् ॥ ಎಂದು ಪ್ರಕಾಶಕೋಶ

निर्वेशा एव सिन्धुः + तस्य = निर्वेशसिन्धोः  निर्वेशा—ಸುಖೋಪಭೋಗ
उदारः तारागणः इव बुद्बुदौघः यस्य सः  उदार—तारागण बुद्बुदौघः
"उदारो दातृमहतोः" ಅಮರ  लक्ष्मीम्—ಕಾಂತಿಯೆಂಬ ಲಕ್ಷ್ಮಿಯನ್ನು
चन्द्रस्य उदयेन उद्दीपिता सौम्याः ताराः यस्मिन् सः चन्द्रोदयोद्दीपितसौम्यताराः
विशोधितात्—ಕತ್ತಲಿಂದ ದೂರವಾದ  विश्वङ्मुखी—ಸರ್ವತೋಮುಖವಾದ
सूर्यसुता—ಯಮುನಾ ನದಿ
प्रियामुखैः—ನದಿಯ ಪ್ರವಾಹಗಳಿಂದ  "मुखं निस्सरणं वक्त्रे" ವಿಶ್ವಕೋಶ
कलङ्केन चित्रीकृतं कलङ्कचित्रीकृतम् । तमस्समाध्यासितसत्वकल्पम्— ತಮಸ್ಸು, ಸತ್ವಗುಣಗಳು ಕಪ್ಪು ಬಿಳುಪು ರೂಪವಾದುದರಿಂದ ಈ ಉಪಮೆ.
सिद्धापगासैकतम्—ದೇವಗಂಗೆಯ ಮರಳು ದಿಣ್ಣೆ
स्वस्य मध्ये सम्पन्नं विशुद्धं धाम यस्यां सा ಎಂಬುದು ವಿಗ್ರಹವಾಕ್ಯ. ದೇವಕೀ ಪಕ್ಷದಲ್ಲಿ ತನ್ನ ಉದರದಲ್ಲಿ ಜನಿಸಿದ ನಿಖಿಲ ಹೇಯಗುಣ ರಹಿತವಾದ ಪರಬ್ರಹ್ಮನುಳ್ಳ ಎಂದರ್ಥ.
संवादं—ಸಾದೃಶ್ಯವನ್ನು
चन्द्रपादैः—ಚಂದ್ರಕಿರಣಗಳಿಂದ
दिशां सरितः + तासां = दिक्सरिताम्,  प्रसादः—ನೈರ್ಮಲ್ಯ

कलावता—ಚಂದ್ರನಿಂದ, ನಾಟ್ಯ ಚತುರನಿಂದ

"कले शिल्पे वित्तवृद्धौ चन्द्रांशे कलने कला"—ಯಾದವ ಕೋಶ

अधीतं लास्यं यस्मात् सः—अधीतलास्यः

ಈ ಪದ್ಯದಲ್ಲಿ ಸಮಾಸೋಕ್ತಿಯಿದೆ. ಆದುದರಿಂದ ಕುಮುದ್ವತಿಯಲ್ಲಿ ವೇಶ್ಯಾಸಾಮ್ಯ ತೋರುತ್ತದ

लूनाकृतीनाम्—ಕತ್ತರಿಸಲ್ಪಟ್ಟ ಅವಯವಗಳುಳ್ಳ

समेयुषी—ಸೇರಿದ

स्वविप्रयोगव्यसनात्—ತನ್ನ ಅಗಲಿಕೆಯ ಭೀತಿಯಿಂದ

पत्राणि कलाः इव तासां समृद्धिः तया पत्रकला समृद्धया

प्रतियातना—ಪ್ರತಿಬಿಂಬ "प्रतिमा प्रतियातना प्रतिच्छाया" ಅಮರ

तुषारांशुमयूखयोगात्— ಚಂದ್ರ ಕಿರಣ ಸಂಪರ್ಕದಿಂದ

सञ्जनने—ಅವತಾರದಲ್ಲಿ

### ಅಭ್ಯಾಸ

**ಪ್ರಶ್ನೆಗಳು :**

1. ಜಗತ್ತಿನ ತಾಪೋಪಶಾಂತಿದಾಯಕವಾದ ಸಂಧ್ಯೆಯನ್ನು ಕವಿಯು ಮಾತುಗಳಲ್ಲಿ ವರ್ಣಿಸಿ
2. विधूदयारम्भ विशेषवश्या प्राची दिशाभासत—ವಿವರಿಸಿ.
3. ಕೃಷ್ಣಾವತಾರದ ರಾತ್ರಿಯನ್ನು ಕವಿಯು ಹೇಗೆ ಚಿತ್ರಿಸಿದ್ದಾನೆ ?
4. ಈ ಕಾವ್ಯಭಾಗದಲ್ಲಿ ಕವಿಯು ಉತ್ಪ್ರೇಕ್ಷಾಲಂಕಾರ ವೈಖರಿಯನ್ನು ಹೇಗೆ ಚಿತ್ರಿಸಿದ್ದಾನೆ ಸಮರ್ಥಿಸಿ.
5. ಕವಿಯು ವೇದಾಂತ ವಿಷಯಗಳನ್ನು ಕಾವ್ಯಕ್ಕೆ ಅಳವಡಿಸಿಕೊಂಡಿರುವ ಬಗೆಯನ್ನು ವಿವರಿಸಿ

# ಕಿರಾತಾರ್ಜುನೀಯಮ್

**ಕವಿ ಕಾವ್ಯ ವಿಚಾರ :**

ಕಿರಾತಾರ್ಜುನೀಯ ಪಂಚಮಹಾಕಾವ್ಯಗಳಲ್ಲೊಂದು. ಇದನ್ನು ಬರೆದ ಕವಿ ಭಾರವಿ ಇವನ ದೇಶಕಾಲಗಳ ಬಗ್ಗೆ ಭಿನ್ನಾಭಿಪ್ರಾಯವುಂಟು. ಕ್ರಿ. ಶ. 634ರ ಐಹೊಳೆಯ येनायोजि न वेश्म स्थिरमर्थविधौ विवेकिना जिनवेश्म स विजयतां रविकीर्तिः कविताश्रित कालिदास भारविकीर्तिः ॥ ಎಂಬ ಶಾಸನದ ಪ್ರಮಾಣದಂತೆ ಇವನ ಕಾಲವನ್ನು ಕ್ರಿ. ಶ. 6 ನೆಯ ಶತಮಾನವೆಂದು ಊಹಿಸಬಹುದು. ಅವಂತಿಸುಂದರೀಕಥೆಯಲ್ಲಿ ಬರುವ ಆಖ್ಯಾಯಿಕೆಯ ಆಧಾರವಂತೆ ಇವನು ಮೊದಲು ಪಲ್ಲವ ರಾಜನಾದ ಸಿಂಹವಿಷ್ಣುವಿನ ಆಸ್ಥಾನದಲ್ಲಿದ್ದನೆಂದು ತಿಳಿದು ಬರುತ್ತದೆ. ಇವನು ರಾಜನಿಗೆ ಅಚ್ಚುಮೆಚ್ಚಾಗಿದ್ದನು. ಇವನ ತಂದೆ

ನಾರಾಯಣಸ್ವಾಮಿ. ನಿಜನಾಮ ದಾಮೋದರ ಎಂದು. ತನ್ನ ನಿರುಪಮ ಪ್ರತಿಭೆಯಿಂದ ಭಾರವಿ ಎಂಬ ತನ್ನ ಹೆಸರನ್ನು ಸಾರ್ಥಕಪಡಿಸಿಕೊಂಡನು. ಇವನು ಕೌಶಿಕ ಸಗೋತ್ರದ ಬ್ರಾಹ್ಮಣವಂಶಕ್ಕೆ ಸೇರಿದವನು. ಇವರ ಪೂರ್ವಜರು ದಕ್ಷಿಣಾಪಥದ ಅಚಲಪುರಕ್ಕೆ ವಲಸೆ ಬಂದು ನೆಲೆಸಿದರು. ಒಮ್ಮೆ ಈ ಕವಿಯು ತೀರ್ಥಯಾತ್ರೆ ಕೈಗೊಂಡು ಕಡೆಗೆ ಸಿಂಹ ವಿಷ್ಣುವಿನ ಆಸ್ಥಾನವನ್ನು ತ್ಯಜಿಸಿ, ಕರ್ನಾಟಕದ ಗಂಗರಾಜ ದುರ್ವಿನೀತನ ಆಸ್ಥಾನವನು ಸೇರಿ ವಿಶೇಷ ಮನ್ನಣೆಗೆ ಪಾತ್ರನಾದನು.

ಗಂಗರಾಜನ ರಾಜಧಾನಿ ತಲವನಪುರ ಅಂದರೆ ಈಗಿನ ತಲಕಾಡು. ಈ ಕವಿಯ ಕಿರಾತಾರ್ಜುನೀಯಕಾವ್ಯದ 15ನೆಯ ಸರ್ಗಕ್ಕೆ ಆಶ್ರಯದಾತನಾದ ದುರ್ವಿನೀತರಾಜನೆ ವ್ಯಾಖ್ಯಾನ ಬರೆದಿರುವನೆಂದೂ ಪ್ರತೀತಿಯಿದೆ. ಇದರಿಂದ ಈ ಕವಿಯು ಎಂತಹ ರಾಜಮನ್ನಣೆ ಯನ್ನು ಪಡೆದಿದ್ದನೆಂದೂ ತಿಳಿದುಬರುವುದು. ''प्रकृति मधुरा भारविगिरः" ''भारवेरर्थ-गौरवम्'' ಮುಂತಾದ ಪ್ರಶಂಸೆಗಳು ಅರ್ಥವತ್ತಾಗಿವೆ. ಇವನ ಕಾವ್ಯಕ್ಕೆ ಪ್ರಕಾಶವರ್ಷ, ಜೋನ ರಾಜ, ಏಕನಾಥ, ಧರ್ಮವಿಜಯ, ವಿನಯಸುಂದರ, ನರಹರ ಮತ್ತು ಮಲ್ಲಿನಾಥರ ವ್ಯಾಖ್ಯಾನ ಗಳಿವೆ. ಅವುಗಳಲ್ಲಿಮಲ್ಲಿನಾಥನ ವ್ಯಾಖ್ಯಾನವೇ ಸರ್ವಾಂಗ ಸುಂದರವಾದುದು. ಮಲ್ಲಿನಾಥನು ಈ ಭಾರವಿಯ ಕಾವ್ಯವನ್ನು ನಾರಿಕೇಳಪಾಕ ಎಂದು ಹೇಳಿದ್ದಾನೆ. ಈ ಮಹಾಕವಿಯು, ಕಿರಾತಾರ್ಜುನೀಯ ಎಂಬ ಈ ಕಾವ್ಯದ ಕಥಾಸಂದರ್ಭವನ್ನು ಮಹಾಭಾರತದ ವನಪರ್ವದಿಂದ ಆರಿಸಿಕೊಂಡಿದ್ದಾನೆ. ಪಾಂಡವರು ದ್ವೈತವನದಲ್ಲಿದ್ದಾಗ ವನೇಚರನೊಬ್ಬನು ಬಂದು ದುರ್ಯೋಧನನ ರಾಜನೀತಿನೈಪುಣ್ಯವನ್ನು ವಿವರಿಸುವನು. ನಂತರ ದ್ರೌಪದಿ, ಭೀಮ ಯುಧಿಷ್ಠಿರರಿಗೆ ಪರಸ್ಪರ ಚಿತ್ತೋದ್ದೀಪಕವಾದ ಸಂಭಾಷಣೆಯು ನಡೆಯುವುದು. ಅದೇ ಸಂದರ್ಭದಲ್ಲಿ ಆಗಮಿಸಿದ ವ್ಯಾಸ ಮಹರ್ಷಿಗಳನ್ನು ಪಾಂಡವರು ಆದರದಿಂದ ಸತ್ಕರಿಸುವರು.

ಇಲ್ಲಿ ಆರಿಸಿರುವ ಮೂರನೆಯ ಸರ್ಗದಲ್ಲಿ ವ್ಯಾಸಮಹರ್ಷಿಗಳ ವರ್ಣನೆ, ವ್ಯಾಸ ಯುಧಿಷ್ಠಿರರ ಸಂಭಾಷಣೆ, ವ್ಯಾಸರು ಅರ್ಜುನನಿಗೆ ಮಾಡಿದ ಮಂತ್ರೋಪದೇಶ, ಪಾಶುಪತಾಸ್ತ್ರವನ್ನು ಪಡೆಯಲು ತಪಶ್ಚರ್ಯೆಗೆ ಹೊರಡುವುದು, ಅರ್ಜುನನ ವಿರಹದಿಂದ ಉಂಟಾದ ಪಾಂಡವರ ವ್ಯಾಕುಲ, ವ್ಯಾಸರು ಕಳುಹಿಸಿದ್ದ ಯಕ್ಷನೊಬ್ಬನ ಜೊತೆ ಅರ್ಜುನನು ಇಂದ್ರಕೀಲಪರ್ವತಕ್ಕೆ ತಪಸ್ಸಿಗೆ ತೆರಳುವುದು ಈ ಭಾಗಗಳು ಸ್ವಾರಸ್ಯವೂ ಗಂಭೀರವೂ ಆದ ಶೈಲಿಯಲ್ಲಿ ನಿರೂಪಿತ ವಾಗಿದೆ.

ಭಾರವಿ ಅರ್ಥಗೌರವಕ್ಕೆ ಹೆಸರಾದವನು. ಅರ್ಥ ಎಂದರೆ ಪ್ರತಿಪಾದ್ಯ ವಿಷಯ ಮತ್ತು ಅರ್ಥಶಾಸ್ತ್ರ ಪ್ರಕ್ರಿಯೆ. ಇವೆರಡೂ ಕವಿಗೆ ವಿವಕ್ಷಿತವೆಂದು ಹೇಳಬಹುದು. ಭಾರವಿಯು ಸಂದರ್ಭೋಚಿತವಾಗಿ ದುರವಗಾಹ್ಯವಾದ ಅರ್ಥಶಾಸ್ತ್ರದ ಅಥವಾ ರಾಜನೀತಿಯ ರಹಸ್ಯ ಗಳನ್ನು ಸ್ವಾರಸ್ಯಪೂರ್ಣವಾಗಿ ಯೋಜಿಸಿದ್ದಾನೆ. ಅಲ್ಲದೆ ಪಾಂಡಿತ್ಯ ಪ್ರಕರ್ಷಕ್ಕೆ ಸೂಚಕ ವಾದ ವೃತ್ತವಿಲಾಸಗಳಿಂದಲೂ ಏಕಾಕ್ಷರೀ, ದ್ವ್ಯಕ್ಷರೀ, ಗತಪ್ರತ್ಯಾಗತಾದಿ ಅಕ್ಷರವಿನ್ಯಾಸ ವೈಚಿತ್ರ್ಯಗಳಿಂದಲೂ, ಯಮಕ, ಅನುಪ್ರಾಸಾದಿ ಚಿತ್ರಬಂಧಗಳಿಂದಲೂ, ಸರ್ವಾಂಗಬಂಧುರ

ದ ಮಹಾಕಾವ್ಯ ಕಿರಾತಾರ್ಜುನೀಯವೊಂದೇ. ಇವನ ಈ ಕಾವ್ಯವು ಮಾಘ, ಹರ್ಷ ಂತಾದ ವಿದ್ವತ್ಕವಿಗಳಿಗೆ ಆದರ್ಶವೆನಿಸಿತು.

ಇವನು ತನ್ನ ಕಾವ್ಯದ ಒಂದೊಂದು ಸರ್ಗದ ಕೊನೆಯ ಪದ್ಯದಲ್ಲಿಯೂ ಲಕ್ಷ್ಮೀ ಎಂಬ ವನ್ನು ಯೋಜಿಸಿ, ಲಕ್ಷ್ಮ್ಯಂಕ ನೆಂಬ ಹೆಸರಿಗೆ ಪಾತ್ರನಾಗಿದ್ದಾನೆ.

# किरातार्जुनीयम्

## तृतीयः सर्गः

ततः शरच्चन्द्रकराभिरामै-
रुत्सर्पिभिः प्रांशुभिरिवांशुजालैः ।
बिभ्राणमानीलरुचं पिशङ्गीः
जटास्तडित्वन्तमिवाम्बुवाहम् ॥ १ ॥

प्रसादलक्ष्मीं दधतं समग्रां
वपु प्रकर्षेण जनातिगेन ।
प्रसह्य चेतस्सु समासजन्त-
मसंस्तुतानामपि भावमार्द्रम् ॥ २ ॥

अनुद्धताकारतया विविक्तां
तन्वन्तमन्तःकरणस्य वृत्तिम् ।
माधुर्यविस्रम्भविशेषभाजा
कृतोपसम्भाषभिवेक्षितेन ॥ ३ ॥

धर्मात्मजो धर्मनिबन्धिनीनां
प्रसूतिमेनःप्रणुदां श्रुतीनाम् ।
हेतुं तदभ्यागमने परीप्सुः
सुखोपविष्टं मुनिमाबभाषे ॥ ४ ॥

अनाप्त पुण्योपचयैर्दुरापा
फलस्य निर्धूतरजाः सवित्री ।
तुल्या भवद्दर्शनसम्पदेषा
वृष्टेर्दिवो वीतबलाहकायाः ॥ ५ ॥

अथ क्रियाः कामदुघाः क्रतूनां
सत्याशिषः सम्प्रति भूमिदेवाः ।
आ संसृतेरस्मि जगत्सु जात-
स्त्वय्यागते यद्बहुमानपात्रम् ॥ ६ ॥

श्रियं विकर्षत्यपहन्त्यघानि
श्रेयः परिस्नौति तनोति कीर्तिम् ।
सन्दर्शनं लोकगुरोरमोघं
तवात्मयोनेरिव किं न धत्ते ॥ ७ ॥

श्च्योतन्मयूखेऽपि हिमद्युतौ मे
ननिर्वृतं निर्वृतिमेति चक्षुः ।
समुज्झितज्ञातिवियोगखेदं
त्वत्सन्निधावुच्छ्वसतीव चेतः ॥ ८ ॥

निरास्पदं प्रश्नकुतूहलित्व-
मस्मास्वधीनं किमु निस्पृहाणाम् ।
तथापि कल्याणकरीं गिरं ते
मां श्रोतुमिच्छा मुखरीकरोति ॥ ९ ॥

इत्युक्तवानुक्तिविशेषरम्यं
मनःसमाधाय जयोपपत्तौ ।
उदारचेता गिरमित्युदारां
द्वैपायनेनाभिदधे नरेन्द्रः ॥ १० ॥

चिचीषतां जन्मवतामलघ्वीं
यशोवतंसामुभयत्र भूतिम् ।
अभ्यर्हिता बन्धुषु तुल्यरूपा
वृत्तिर्विशेषेण तपोधनानाम् ॥ ११ ॥



तथापि निघ्नं नृप तावकीनैः
प्रह्वीकृतं मे हृदयं गुणौघैः ।
वीतस्पृहाणामपि मुक्तिभाजां
भवन्ति भव्येषु हि पक्षपातः ॥ १२ ॥

सुता न यूयं किमु तस्य राज्ञः
सुयोधनं वा न गुणैरतीताः ।
यस्त्यक्तवान्वः स वृथा बलाद्वा
मोहं विधत्ते विषयाभिलाषः ॥ १३ ॥

जहातु नैनं कथमर्थसिद्धिः
संशय्य कर्णादिषु तिष्ठते यः ।
असाधुयोगा हि जयान्तरायाः
प्रमाथिनीनां विपदां पदानि ॥ १४ ॥

पथश्च्युतायां समितौ रिपूणां
धर्म्यां दधानेन धुरं चिराय ।
त्वया विपत्स्वप्यविपत्तिरम्य-
माविष्कृतं प्रेम परं गुणेषु ॥ १५ ॥

विधाय विध्वंसमनात्मनीनं
शमैकवृत्तेर्भवतश्छलेन ।
प्रकाशितत्वन्मतिशीलसाराः
कृतोपकारा इव विद्विषस्ते ॥ १६ ॥

लभ्या धरित्री तव विक्रमेण
ज्यायांश्च वीर्यास्त्रबलैर्विपक्षः ।
अतः प्रकर्षाय विधिर्विधेयः
प्रकर्षतन्त्रा हि रणे जयश्रीः ॥ १७ ॥

त्रिस्सप्तकृत्वो जगतीपतीनां
हन्ता गुरुर्यस्य स जामदग्न्यः ।
वीर्यावधूतः स्म तदा विवेद
प्रकर्षमाधारवशं गुणानाम् ॥ १८ ॥

यस्मिन्ननैश्वर्यकृतव्यलीकः
पराभवं प्राप्त इवान्तकोऽपि ।
धुन्वन्धनुः कस्य रणे न कुर्या-
न्मनो भयैकप्रवणं स भीष्मः ॥ १९ ॥

सृजन्तमाजाविषुसंहतीर्वः
सहेत कोपज्वलितं गुरुं कः ।
परिस्फुरल्लोलशिखाग्रजिह्वं
जगज्जिघत्सन्तमिवान्तवह्निम् ॥ २० ॥

निरीक्ष्य संरम्भनिरस्तधैर्यं
राधेयमाराधितजामदग्न्यम् ।
असंस्तुतेषु प्रसभं भयेषु
जायेत मृत्योरपि पक्षपातः ॥ २१ ॥

यया समासादितसाधनेन
सुदुश्चरामाचरता तपस्याम् ।
एते दुरापं समवाप्य वीर्य-
मुन्मूलितारः कपिकेतनेन ॥ २२ ॥

महत्त्वयोगाय महामहिम्ना
माराधनीं तां नृप देवतानाम् ।
दातुं प्रदानोचित भूरिधाम्नी-
मुपागतः सिद्धिमिवास्मि विद्याम् ॥ २३ ॥

इत्युक्तवन्तं व्रज साधयेति
प्रमाणयन्वाक्यमजातशत्रोः ।
प्रसेदिवांसं तमुपाससाद
वसन्निबान्ते विनयेन जिष्णुः ॥ २४ ॥

निर्याय विद्याथ दिनादिरम्या-
द्बिम्बादिवार्कस्य मुखान्महर्षेः ।
पार्थाननं वह्निकणावदाता
दीप्तिः स्फुरत्पद्ममिवाभिपेदे ॥ २५ ॥

योगं च तं योग्यतमाय तस्मै
तपःप्रभावाद्वितताार सद्यः ।
येनास्य तत्त्वेषु कृतेऽवभासे
समुन्मिमीलेव चिराय चक्षुः ॥ २६ ॥

आकारमाशंसितभूरिलाभं
दधानमन्तःकरणानुरूपम् ।
नियोजयिष्यन्विजयोदये तं
तपः समाधौ मुनिरित्युवाच ॥ २७ ॥

अनेन योगेन विवृद्धतेजा
निजां परस्मै पदवीमयच्छन् ।
समाचराचारमुपात्तशस्त्रो
जपोपवासाभिषवैर्मुनीनाम् ॥ २८ ॥

करिष्यसे यत्र सुदुश्चराणि
प्रसत्तये गोत्रभिदस्तपांसि ।
शिलोच्चयं चारुशिलोच्चयं त-
मेष क्षणान्नेष्यति गुह्यकस्त्वाम् ॥ २९ ॥

इति ब्रुवाणेन महेन्द्रसूनुं
महर्षिणा तेन तिरोबभूवे ।
तं राजराजानुचरोऽस्य साक्षा-
त्प्रदेशमादेश इवाधितष्ठौ ॥ ३० ॥

कृतानतिर्व्याहृतसान्त्ववादे
जातस्पृहः पुण्यजनः स जिष्णौ ।
इयाय सख्याविव सम्प्रसादं
विश्वासयत्याशु सतां हि योगः ॥ ३१ ॥

अथोष्णभासेव सुमेरुकुञ्जा-
न्विहीयमानानुदयाय तेन ।
बृहद्द्युतीन्दुःखकृतात्मलाभं
तमः शनैः पाण्डुसुतान्प्रपेदे ॥ ३२ ॥

असंशयालोचितकार्यनुन्नः
प्रेम्णा समानीय विभज्यमानः ।
तुल्याद्विभागादिव तन्मनोभि-
र्दुःखातिभारोऽपि लघुः स मेने ॥ ३३ ॥

धैर्येण विश्वास्यतया महर्षे-
स्तीव्रादरातिप्रभवाच्च मन्योः ।
वीर्यं च विद्वत्सु सुते मघोनः
स तेषु न स्थानमवाप शोकः ॥ ३४ ॥

तान्भूरिधाम्नश्चतुरोऽपि दूरं
विहाय यामानिव वासरस्य ।
एकौघभूतं तदशर्म कृष्णां
विभावरीं ध्वान्तमिव प्रपेदे ॥ ४५ ॥

तुषारलेखाकुलितोत्पलाभे
पर्यश्रुणी मङ्गलभङ्गभीरुः ।
अगूढभावापि विलोकने सा
न लोचने मीलयितुं विषेहे ॥ ३६ ॥

अकृत्रिमप्रेमरसाभिरामं
रामार्पितं दृष्टिविलोभिदृष्टम् ।
मनःप्रसादाञ्जलिना निकामं
जग्राह पाथेयमिवेन्द्रसूनुः ॥ ३७ ॥

धैर्यावसादेन हृतप्रसादा
वन्यद्विपेनेव निदाघसिन्धुः ।
निरुद्धबाष्पोदयसन्नकण्ठ-
मुवाच कृच्छ्रादिति राजपुत्री ॥ ३८ ॥

मग्नां द्विषच्छद्मनि पङ्कभूते
सम्भावनां भूतिमिवोद्धरिष्यन् ।
आधिद्विषामा तपसां प्रसिद्धे-
रस्मद्विना मा भृशमुन्मनीभूः ॥ ३९ ॥

यशोऽधिगन्तुं सुखलिप्सया वा
मनुष्यसंख्यामतिवर्तितुं वा ।
निरुत्सुकानामभियोगभाजां
समुत्सुकेवाङ्कमुपैति सिद्धिः ॥ ४० ॥

लोकं विधात्रा विहितस्य गोप्तुं
क्षत्रस्य मुष्णन्वसु जैत्रमोजः ।
तेजस्विताया विजयैकवृत्ते-
र्निघ्नन् प्रियं प्राणमिवाभिमानम् ॥ ४१ ॥

व्रीडानतैराप्तजनोपनीतः
संशय्य कृच्छ्रेण नृपैः प्रपन्नः ।
वितानभूतं विततं पृथिव्यां
यशः समूहन्निव दिग्विकीर्णम् ॥ ४२ ॥

वीर्यावदानेषु कृतावमर्ष-
स्तन्वन्नभूतामिव सम्प्रतीतिम् ।
कुर्वन्प्रयामक्षयमायतीना-
मर्कत्विषामह्न इवावशेषः ॥ ४३ ॥

प्रसह्य योऽस्मासु परैः प्रयुक्तः
स्मर्तुं न शक्यः किमुताधिकर्तुम् ।
नवीकरिष्यत्युपशुष्यदार्द्रः
स त्वद्विना मे हृदयं निकारः ॥ ४४ ॥

प्राप्तोऽभिमानव्यसनादसह्यं
दन्तीव दन्तव्यसनाद्विकारम् ।
द्विषत्प्रतापान्तरितोरुतेजाः
शरद्घनाकीर्ण इवाद्रिरह्नः ॥ ४५ ॥

सव्रीडमन्दैरिव निष्क्रियत्वा-
न्नात्यर्थमस्त्रैरवभासमानः ।
यशःक्षयक्षीणजलार्णवाभ-
स्त्वमन्यमाकारमिवाभिपन्नः ॥ ४६ ॥

दुःश्वासनामर्षरजोविकीर्णै-
रेभिर्विनाथैरिव भाग्यनाथैः ।
केशैः कदर्थीकृतवीर्यसारः
कच्चित्स एवासि धनञ्जयस्त्वम् ॥ ४७ ॥

स क्षत्रियस्त्राणसहः सतां य-
स्तत्कार्मुकं कर्मसु यस्य शक्तिः ।
वहन् द्वयीं यद्यफलेऽर्थजाते
करोत्यसंस्कारहतामिवोक्तिम् ॥ ४८ ॥

वीतौजसः सन्निधिमात्रशेषा
भवत्कृतां भूतिमपेक्षमाणाः ।
समानदुःखा इव नस्त्वदीयाः
सरूपतां पार्थ गुणा भजन्ते ॥ ४९ ॥

आक्षिप्यमाणं रिपुभिः प्रमादा-
न्नागैरिवालूनसटं मृगेन्द्रम् ।
त्वां धूरियं योग्यतयाधिरूढा
दीप्त्या दिनश्रीरिव तिग्मरश्मिम् ॥ ५० ॥

करोति योऽशेषजनातिरिक्तां
सम्भावनामर्थवतीं क्रियाभिः ।
संसत्सु जाते पुरुषाधिकारे
न पूरणी तं समुपैति संख्या ॥ ५१ ॥

प्रियेषु यैः पार्थ विनोपपत्ते-
र्विचिन्त्यमानैः क्लममेति चेतः ।
तव प्रयातस्य जयाय तेषां
क्रियादघानां मघवा विघातम् ॥ ५२ ॥

मा गाश्चिरायैकचरः प्रमादं
वसन्नसम्बाधशिवेऽपि देशे ।
मात्सर्यरागोपहतात्मनां हि
स्खलन्ति साधुष्वपि मानसानि ॥ ५३ ॥

तदाशु कुर्वन्वचनं महर्षे-
र्मनोरथान्नः सफलीकुरुष्व ।
प्रत्यागतं त्वास्मि कृतार्थमेव
स्तनोपपीडं परिरब्धुकामा ॥ ५४ ॥

उदीरितां तामिति याज्ञसेन्या
नवीकृतोद्ग्राहितविप्रकाराम् ।
आसाद्य वाचं स भृशं दिदीपे
काष्ठामुदीचीमिव तिग्मरश्मिः ॥ ५५ ॥

अथाभिपश्यन्निव विद्विषः पुरः
पुरोधसारोपितहेतिसंहतिः ।
बभार रम्योऽपि वपुस्स भीषणं
गतः क्रियां मन्त्र इवाभिचारिकीम् ॥ ५६ ॥

अविलङ्घ्यविकर्षणं परैः
प्रथितज्यारवकर्म कार्मुकम् ।
अगतावरिदृष्टिगोचरं
शितनिस्त्रिंशयुजौ महेषुधी ॥ ५७ ॥

यशसेव तिरोदधन्मुहु
र्महसा गोत्रभिदायुधक्षतीः ।
कवचं च सरत्नमुद्वह-
न्ज्वलितज्योतिरिवान्तरं दिवः ॥ ५८ ॥

अलकाधिप भृत्यदर्शितं
शिवमुर्वीध वर्त्म सम्प्रयान् ।
हृदयानि समाविवेश स
क्षणमुद्बाष्पदृशां तपोभृताम् ॥ ५९ ।

अनुजगुरथ दिव्यं दुन्दुभिध्वानमाशाः
सुरकुसुमनिपातैर्व्योम्नि लक्ष्मीर्वितेने ।
प्रियमिव कथयिष्यन्नालिलिङ्ग स्फुरन्तीं
भुवमनिभृतवेलावीचिबाहुः पयोधिः ॥ ६० ॥

इति

श्री भारविकृतौ किरातार्जुनीये महाकाव्ये

तृतीयः सर्गः

**ಟಿಪ್ಪಣಿಗಳು :**

किरातश्चार्जुनश्च किरातार्जुनौ किरातार्जुनावधिकृत्य कृतो ग्रन्थः किरातार्जुनीयम् ''अधिकृत्य कृते ग्रन्थे'' ಎಂಬ ಅನುಶಾಸನದಿಂದ किरातार्जुनीयम् ಎಂದಾಗಿದೆ.

ಪದ್ಯಸಂಖ್ಯಾ :

1. ಮಹಾಕವಿಗಳು ಎರಡು, ಮೂರು, ನಾಲ್ಕು ಅಥವಾ ಅದಕ್ಕಿಂತ ಹೆಚ್ಚು ಪದ್ಯಗಳನ್ನು ಒಂದೇ ವಾಕ್ಯದಂತೆ ರಚಿಸುವರು. ಅದಕ್ಕೆ ಕ್ರಮವಾಗಿ ಯುಗ್ಮ, ವಿಶೇಷಕ, ಕಲಾಪಕ, ಕುಲಕ ಎಂದು ಕರೆಯುವರು. द्वाभ्यां युग्ममिति प्रोक्तं त्रिभिः श्लोकैर्विशेषकम् । कलापकं चतुर्भिः स्यात्तदूर्ध्वं कुलकं मृतम्'' पिशङ्गी:=ಹೊಂಬಣ್ಣವಾದ.
2. असंस्तुतानाम्—अपरिचितानाम्
''संस्तवः स्यात् परिचयः'' इत्यमरः ।
3. माधुर्यं च विस्रम्भश्च माधुर्यविस्रम्भौ तयोः विशेषः तं भजतीति तेन माधुर्यविस्रम्भविशेषभाजा ।
4. धर्मं निबध्नतीति धर्मनिबन्धिन्यः तासाम् धर्मनिबन्धिनीनाम्, अग्निहोत्रादि धर्मप्रतिपादकानाम् इत्यर्थः । परीप्सुः परीप्सुः ''आप्ज्ञप्यृधामीत्'' ಎಂಬ ಅನುಶಾಸನದಿಂದ ಈ ಕಾರ ಬಂದಿದೆ. आ+भाषे. आ–लिट्, √भाष्.

5. निर्धूतं रजः यस्याः सा निर्धूतरजाः ರಜೋಗುಣದಿಂದ ದೂರವಾದ, ಧೂಳಿಲ್ಲದ.
वीतबलाहकायाः दिवः त्विषः तुल्या ಇಲ್ಲಿ ಉಪಮಾಲಂಕಾರ.

6. अस्मि ಎಂಬುದು अहं ಎಂಬ ಅರ್ಥದಲ್ಲಿ ಬರೆದಿರುವ ವಿಭಕ್ತಿಪ್ರತಿರೂಪಕಾವ್ಯಯ.
"अस्मीत्यस्मदर्थानुवादेऽहमर्थेपि" इति गणव्याख्याने आ संसृतेः–आ संसारात् ಸಂಸಾರ ಇರುವವರೆಗೂ अभिविधौ आङ् ।

7. आत्मयोनेः=ಬ್ರಹ್ಮನ.

परि+स्तौति लट् प–पद
स्तौति स्तुतः–स्तुवन्ति
स्तौषि स्तुथः - स्तुथ
स्तौमि स्तुव––स्तुमः

8. हिमद्युतिः=ಚಂದ್ರ.
हिमद्युतौ श्च्योतन्मयूखेऽपि चेतः निर्वृतिं नैति ಎಂಬಲ್ಲಿ ವಿಶೇಷೋಕ್ತ್ಯಲಂಕಾರ
निर्वृतिः=ಸುಖ.

9. मुखं वागस्यास्तीति मुखरः ಬಿಡುವಿಲ್ಲದೆ ಮಾತನಾಡುವವನು.
"रप्रकरणे खमुखकुञ्जेभ्य उपसङ्ख्यानम्" ಎಂಬ ಅನುಶಾಸನದಂತೆ रेफ ಬಂದಿದೆ.
दुर्मुखे मुखराबद्धमुखौ......इत्यमरः
अमुखरं मुखरं संपद्यमानं करोतीति मुखरीकरोति ಇಲ್ಲಿ च्वि ಪ್ರತ್ಯಯವು ಬಂದಿದೆ.

10. द्वीपं अयनं यस्य सः द्वैपायनः ವ್ಯಾಸರು. अभि+दधे लिट् आ–पद.

11. चेतुमिच्छताम् चिचीषताम्=ಸಂಗ್ರಹಿಸಲು ಇಷ್ಟಪಡುವವರ. अभ्यर्हिता ಉಚಿತವಾದುದು.

12. तावकीनैः=त्वदीयैः "युष्मदस्मदोरन्यतरस्यां खञ्च" ಎಂಬ ಸೂತ್ರದಿಂದ खञ् ಬಂದು ಅದಕ್ಕೆ ईन् ಆದೇಶವಾಗಿದೆ.
प्रह्वीकृतम्=आवर्जितम् , निघ्नम्=ಅಧೀನವಾದುದು. "अधीनो निघ्न आयत्तः" इत्यमरः

13. वि=धत्ते लट् आ–पद.

धत्ते दधाते दधते
धत्से दधाथे दध्वे
दधे दध्वहे दध्महे

14. अन्तरायः=ಅಡ್ಡಿ. विघ्नोऽन्तरायः प्रत्यूहः इत्यमरः ; तिष्ठते "प्रकाशनस्थेयाख्ययोश्च" ಎಂಬ ಅನುಶಾಸನದಿಂದ आत्मनेपद ಬಂದಿದೆ.
प्रमाथिनीनाम्=ಬುಡಸಮೇತವಾಗಿ ಉರುಳಿಸುವ.

15. समितौ=सभायाम् । सभासमिति संसदः इत्यमरः
धर्म्याम्—धर्मपथ्यर्थ न्यायादनपेते ಎಂಬ ಅನುಶಾಸನದಿಂದ-ಧರ್ಮದಿಂದ ಕೂಡಿದ್ದು ಎಂಬ ಅರ್ಥದಲ್ಲಿ यत् ಪ್ರತ್ಯಯವು ನಿಪಾತವಾಗಿದೆ.

16. अनात्मनीनाम्—आत्मने हितः आत्मनीनः सः न भवतीत्यनात्मनीनः तम् ।
"आत्मन्विश्वजनभोगोत्तरपदात्खः" ಎಂಬ ಸೂತ್ರದಿಂದ ख ಪ್ರತ್ಯಯ ಬಂದು ईन ಆದೇಶವಾಗಿದೆ.

17. प्रकर्षतन्त्रा हि रणे जयश्रीः ಎಂಬುದು ಒಂದು ಸೂಕ್ತಿ.

18. जमदग्नेः अपत्यं पुमान् जामदग्न्यः । गर्गादिभ्यो यञ् ಎಂಬ ಸೂತ್ರದಿಂದ यञ् ಬಂದಿದೆ.
विवेद लिट् प-पद
विवेद स्म ಇಲ್ಲಿ स्म ಎಂಬುದು ಪಾದಪೂರಣಾರ್ಥದಲ್ಲಿ ಬಂದಿದೆ.

19. व्यलीकम्=ದುಃಖ. दुःखे वैलक्ष्ये व्यलीकम् इति यादवः ।
भयैकप्रवणम्=ಕೇವಲ ಭಯದಲ್ಲಿ ಮುಳುಗಿದ.

20. अत्तुमिच्छन्तम्=जिघत्सन्तम् "लङ् सनोर्घस्लृ" ಎಂಬ ಸೂತ್ರದಿಂದ घस्लृ ಆದೇಶ ಬಂದಿದೆ. अन्तवह्निम्=प्रलयाग्निम्, सहेत विधिलिङ् आ-पद.

21. संरंभेण निरस्तं धैर्यं येन तम् ಕೋಪದಿಂದ ಧೈರ್ಯವನ್ನು ಹೋಗಲಾಡಿಸಿದ.
जायेत विधिलिङ् आ-पद.

23. भूरि धाम्नीम्—महाप्रभावाम्
"धाम देशे गृहे रश्मौ स्थाने जन्म प्रभावयोः"—इति विश्वः ।

24. प्रसेदिवांसम्-प्रसन्नम् "भाषायां सदवसश्रुवः" ಎಂಬ ಸೂತ್ರದಂತೆ क्वसु ಪ್ರತ್ಯಯ ಬಂದಿದೆ. जिष्णुः-जयनशीलः ಅರ್ಜುನ.
उप+आ+ससाद ಸಮೀಪಿಸಿದನು.
प-पद-लिट्.

25. निर्याय=निर्गत्य ಇಲ್ಲಿ ल्यप् ಪ್ರತ್ಯಯವು ಬಂದಿದೆ.

28. अभिषवः=ಸ್ನಾನ उपात्तम् शस्त्रम् येन सः उपात्तशस्त्रः ।

29. प्रसत्तये=ಪ್ರಸನ್ನತೆಗಾಗಿ गुह्यकः=ಯಕ್ಷ.

30. तिरोबभूवे—ಅಂತರ್ಧಾನವಾಗೋಣವಾಯಿತು भावे लिट्, राजराज—ಯಕ್ಷರಾಜ
अधितष्ठौ=प्राप्तः—लिट् प—पद

31. कृता आनतिः (प्रणामः) येन सः
संप्रसादम्—ವಿಶ್ವಾಸವನ್ನು

विश्वासयत्याशु सतां हि योगः ಇಲ್ಲಿ ಅರ್ಥಾಂತರ ನ್ಯಾಸಾಲಂಕಾರ.

33. नुन्नः=निरस्तः ।

35. विभावरीं ध्वान्तमिव प्रपेदे ಇಲ್ಲಿ ಉಪಮಾಲಂಕಾರ. अशर्म=ದುಃಖವು.

36. तुषारस्य लेखा, तुषारलेखया आकुलिते उत्पले तयोः आमेव आभा ययोस्ते ಹಿಮ ಬಿಂದುಗಳ ಪರಂಪರೆಯಿಂದ ಕೂಡಿದ ನೀಲೋತ್ಪಲಗಳ ಕಾಂತಿಯಂತೆ ಕಾಂತಿಯುಳ್ಳ (ಕಣ್ಣುಗಳು ದ್ರೌಪದಿಯ ಕಣ್ಣಿನಲ್ಲಿ ಕಣ್ಣೀರು ಒತ್ತರಿಸಿ ಬರುತ್ತಿತ್ತು. ಅವಳಿಗೆ ಅರ್ಜುನನನು) ನೋಡಬೇಕೆಂಬ ಬಯಕೆಯಿದ್ದರೂ ಕಣ್ಣೀರು ಕೆಳಗೆ ಸುರಿದರೆ ಏನು ಅಮಂಗಳವಾದೀತೋ ಎಂಬ ರೀತಿಯಿಂದ ಹಾಗೆಯೇ ತಡೆದುಕೊಂಡಳು ಎಂದರ್ಥ.

37. क्रियया नेर्वृत्तः कृत्रिमः "ड्वितः क्त्रिः" ಎಂಬ ಸೂತ್ರದಿಂದ क्त्रि ಪ್ರತ್ಯಯವು क्त्रेर्मम् नित्यं ಎಂಬ ಸೂತ್ರದಿಂದ मम् ಪ್ರತ್ಯಯವೂ ಬಂದು कृत्रिम ಎಂಬ ರೂಪವಾಗಿದೆ. न कृत्रिमः अकृत्रिमः ಸ್ವಾಭಾವಿಕವಾದ दृष्टिविलोभि=दृष्टिप्रियम् ।

38. सन्नकण्ठम्=ಗದ್ಗದ ಕಂಠದಿಂದ धैर्यविसादेन=धैर्यभ्रंशेन हृतप्रसादा–हृतः नष्टः प्रसादः=मनोनैर्मल्यं यस्याः सा (ಕಳವಳಗೊಂಡ ದ್ರೌಪದಿ).

39. द्विषच्छद्मनि=ಶತ್ರುಗಳ ಕಪಟದಲ್ಲಿ पङ्कभूते ಎಂಬಲ್ಲಿ भूत ಶಬ್ದ ಉಪಮಾವಾಚಕವಾಗಿದೆ. "भूतं क्ष्मादौ पिशाचादौ न्याय्ये सत्योपमानयोः" इति विश्वः ।

40. लब्धुमिच्छा तया–लिप्सया
अभियोगभाजाम्=अभिनिवेशवताम्
समृत्सुकेवाङ्कमुपैति सिद्धिः ಉಪಮಾಲಂಕಾರ.

41. जैत्रम्=जयनशीलम् । ओजः=ಬಲ.
ओजो बले च दीप्तौ च इति विश्वः ತೇಜಸ್ವಿಗಳಿಗೆ ಮಾನಹಾನಿಯು ಪ್ರಾಣಹಾನಿಗೆ ಸಮ ಎಂದು ಸ್ವಾರಸ್ಯವಾಗಿ ತಿಳಿಸಿದ್ದಾನೆ.

42. समूहत्विव=ಸಂಕೋಚವಾಗುತ್ತಿದೆಯೋ ಎಂಬಂತೆ.

43. वीर्यावदानं–ವೀರಗಾಥೆ. "अवदानं कर्मवृत्तं" इत्यमरः प्रयामक्षय्यां=दैर्घ्येन शं ।

44. निकारः=ಅವಮಾನ अधिकर्तुं=ಅನುಭವಿಸಲು ಸ್ವಲ್ಪ ಒಣಗಿದಂತೆ ಇದ್ದ ಗಾಯವು ಪುನಃ ಉಲ್ಬಣವಾಗುವಿಕೆ ಎಂಬ ಅಪ್ರಸ್ತುತವಾದ ಗಾಯದ ವಿಷಯವು ತೋರುವುದರಿಂದ ಸಮಾಸೋಕ್ತ್ಯಲಂಕಾರ.
त्वत् विना ಎಂಬಲ್ಲಿ "पृथग्विना नानाभिस्तृतीयान्यतरस्याम् ಎಂಬ ಸೂತ್ರದ ನಿಯಮದಂತೆ ಪಂಚಮೀ ವಿಭಕ್ತಿ ಬಂದಿದೆ.

46. क्षीणजलार्णवाभः क्षीणजलस्य अर्णवस्य आमेवाभा यस्य सः

आभिपन्न:=ಹೊಂದಿದ್ದೀಯೆ.

47. भाग्यनाथै:=ದೈವಾವಲಂಬಿಗಳಾದ

कदर्थीकृतौ वीर्यसारौ यस्य सः कदर्थीकृतवीर्यसारः

48. त्राणसह:—ರಕ್ಷಿಸಲು ಸಮರ್ಥವಾದ

संस्कारहतामिवोक्तिम् ಉಪಮಾಲಂಕಾರ ; ವ್ಯುತ್ಪತ್ತಿರಹಿತವಾದ ಮಾತಿನಂತೆ.

49. वीतं ओजः येषां ते वीतौजस:—ಕಾಂತಿಹೀನವಾದ

ಎಲೈ ಅರ್ಜುನ, ನಿನ್ನ ಶೌರ್ಯಾದಿಗುಣಗಳೂ ಸಹ ನಮ್ಮಂತೆ ಕಾಂತಿಹೀನವಾ ದುಃಖಕ್ಕೆ ಸಮಭಾಗಿಗಳಾಗುತ್ತವೆ ಎಂಬುದು ಅಭಿಪ್ರಾಯ.

50. आलूनसटम् आलूनाः सटाः यस्य सः तम् ಕೆದರಿದ ಕೇಸರವುಳ್ಳ "सटा जटा केसरयोः" इत्यमरः । धू:—कार्यभारः

52. क्रियात्—कृ धातुः अशीर्लिङ् परस्मैपद ; अघानाम्—व्यसनानां "दुःखैनो व्यसनेष्वघम्" इत्यमरः ।

53. असंबाधः=असंकटः 'संकटं ना तु संबाधः इत्यमरः

मा गाः 'इणो गा लुङि' ಎಂಬ ಅನುಶಾಸನದಿಂದ इण् ಧಾತುವಿಗೆ गा ಆದೇಶವಾಗಿದೆ.

54. परिरब्धुं कामः यस्याः सा परिरब्धुकामा । 'तुं काममनसोरपि' ಎಂಬ ಅನುಶಾಸನದಿಂ तुम् ಪ್ರತ್ಯಯದ ಮಕಾರವು ಲೋಪವಾಗಿದೆ.

56. हेतिः=आयुधः

बभार रम्योऽपि............आभिचारिकीम्' ಎಂಬಲ್ಲಿ ಉಪಮಾಲಂಕಾರ.

ಮಂತ್ರ ಸ್ವಾಭಾವಿಕವಾಗಿ ರಮ್ಯವಾಗಿದ್ದರೂ ಆಭಿಚಾರಿಕ ಕ್ರಿಯೆಯಲ್ಲಿ ಪ್ರಯೋಗಿಸಿದಾಗ ಭೀಷಣವಾಗುವಂತೆ ಅರ್ಜುನನು ಸ್ವಭಾವದಿಂದ ಶಾಂತನಾದರೂ ಪುರೋಹಿತರು ಅಭಿಮಂತ್ರಿಸಿ ಕೊಟ್ಟ ಆಯುಧಗಳನ್ನು ಪಡೆದು ಭಯಂಕರನಾದನು.

57. इषवः धीयन्ते अस्मिन्निति इषुधिः ।

महान्तौ च तौ इषुधी च महेषुधी । निस्त्रिंश:=खड्गः ।

58. गोत्रभिदः=इन्द्रस्य, गोत्रान् (पर्वतान्) भिनत्तीति गोत्रभित् ಇಂದ್ರ. आयुधक्षतीः= प्रहारकिणान्

59. अलकायाः अधिपः=कुबेरः

अलकाधिपस्य भृत्यः=यक्षः, शिवम्=ನಿರ್ಬಾಧವಾದ.

60. अनुजगुः=ಅನುಸರಣಿಸಿದುವು.

ಸಮುದ್ರರಾಜನು ಚಂಚಲವಾದ ಅಲೆಗಳೆಂಬ ಬಾಹುಗಳಿಂದ ಭೂಮಿಯನ್ನು ಕುರಿತು

ಶೀಘ್ರದಲ್ಲಿಯೇ ನಿನ್ನ ಭಾರವು ಹೊರಟು ಹೋಗುವುದು ಎಂಬ ಪ್ರಿಯವಾರ್ತೆಯನ್ನು ಹೇಳುತ್ತಲೋ ಎಂಬಂತೆ ಆಲಿಂಗಿಸಿದನು.

ಇಲ್ಲಿ ಸಮಾಸೋಕ್ತ್ಯಲಂಕಾರ.

आशा=दिक् वि+तेने लिट्–आत्मनेपद

वीचय एव बाहवः यस्य सः वीचिबाहुः

## ಪ್ರಶ್ನೆಗಳು

1) ಕವಿಯು ವ್ಯಾಸರನ್ನು ಹೇಗೆ ವರ್ಣಿಸಿದ್ದಾನೆ ?

2) ಈ ಸರ್ಗದಲ್ಲಿ ಕಂಡುಬರುವ ಸಂದರ್ಭಗಳ ಅರ್ಥಗಾಂಭೀರ್ಯವನ್ನು ವಿಶದಪಡಿಸಿರಿ.

3) ಅರ್ಜುನನ ವಿರಹದಿಂದ ಸಂತಪ್ತಳಾದ ದ್ರೌಪದಿಯ ಒಂದೊಂದು ಮಾತಿನ ಸ್ವಾರಸ್ಯವನ್ನೂ ವಿವರಿಸಿ.

4) ವ್ಯಾಸರ ಆಗಮನದ ಉದ್ದೇಶವೇನು ? ಅದನ್ನು ಹೇಗೆ ವಿವರಿಸಿದ್ದಾರೆ ?

## ಸೂಕ್ತಿಗಳು

| | ಪದ್ಯ |
|---|---|
| अद्य क्रियाः कामदुघाः क्रतूनाम् । | ६ |
| सत्याशिषः संप्रति भूमिदेवाः । | ६ |
| वीतस्पृहाणामपि मुक्तिभाजां भवन्ति भव्येषु हि पक्षपाताः। | १२ |
| मोहं विधत्ते विषयाभिलाषः । | १३ |
| असाधुयोगा हि जयान्तरायाः प्रमाथिनीनां विपदां पदानि । | १४ |
| प्रकर्षतन्त्रा हि रणे जयश्रीः । | १७ |
| विवेद प्रकर्षमाधारवशं गुणानाम् । | १८ |
| विश्वासयत्याशु सतां हि योगः । | ३१ |
| समुत्सुकेवाङ्कमुपैति सिद्धि । | ४० |
| तत्कार्मुकं कर्मसु यस्य शक्तिः। | ४८ |
| मात्सर्यरागोपहतात्मनां हि स्खलन्ति साधुष्वपि मानसानि | ५३ |

# (ಈ) ಮಾಘನ ಶಿಶುಪಾಲವಧಂ

## ಚತುರ್ದಶಃ ಸರ್ಗಃ

ಮಾಘ ಶಿಶುಪಾಲವಧ ಮಹಾಕಾವ್ಯವನ್ನು ಬರೆದ ವಿದ್ವತ್ಕವಿ. ವಾಮನ, ಆನಂ ವರ್ಧನರ ದೃಷ್ಟಿಯಲ್ಲಿ ಇದು ಉತ್ತಮ ಕಾವ್ಯ. ಮಲ್ಲಿನಾಥನೂ ಈ ಕಾವ್ಯಕ್ಕೆ ವ್ಯಾಖ್ಯಾ ಬರೆದಿದ್ದಾನೆ. ಈ ಕಾವ್ಯವು ಪಂಚ ಮಹಾಕಾವ್ಯಗಳಲ್ಲಿ ಒಂದೆಂದು ಪರಿಗಣಿತವಾಗಿದೆ. ಇವ ತಂದೆ ದತ್ತಕ. ಪ್ರಾಯಃ ಕವಿ ಗುಜರಾತಿನವನು. ಕವಿಯು ತನ್ನ ಕಾವ್ಯದಲ್ಲಿ ಪಾಣಿನಿಸೂತ್ರ ಟೀಕೆಯಾದ 'ನ್ಯಾಸ'ವನ್ನು ಹೆಸರಿಸಿದ್ದಾನೆ. ಆ ಕಾರಣ ಕವಿಯ ಕಾಲವು ಬಹು ಕ್ರಿ.ಶ. 7ನೆಯ ಶತಮಾನವಿರಬಹುದು. ಈತನ ಕಾವ್ಯವು ಭಾರವಿಯ ಕಿರಾತಾರ್ಜುನೀಯ ಪ್ರತಿಬಿಂಬದಂತೆ ತೋರುತ್ತದೆ. ಆ ಕಾರಣ ಕವಿಯು ಭಾರವಿಗಿಂತ ಈಚಿನವನಿರಬಹುದು. ಪ್ರಾಚೀನ ಪಂಡಿತರ ದೃಷ್ಟಿಯಲ್ಲಿ ಮಾಘನ ಸಿದ್ಧಿಯು ಹೆಚ್ಚಿನದು. ಮಾಘನು ತನ್ನ ಕಾವ್ಯದ ತನ್ನ ಬಹುಮುಖ ಪಾಂಡಿತ್ಯವನ್ನು ಮೆರೆದಿದ್ದಾನೆ.

**ಪೂರ್ವಕಥೆ :**

ಧರ್ಮರಾಜನು ಇಂದ್ರಪ್ರಸ್ಥದಲ್ಲಿ ರಾಜ್ಯಭಾರ ಮಾಡುತ್ತಿದ್ದಾನೆ. ರಾಜಸೂಯ ಯಾಗವನ್ನು ಮಾಡಲು ಆರಂಭಿಸಿದ್ದಾನೆ. ಎಲ್ಲ ರಾಜರೂ ನೆರೆದಿದ್ದಾರೆ. ಯಾಗವೂ ಸಾಂಗವಾ ನೆರವೇರಿದೆ. ಅಗ್ರಪೂಜೆ ಯಾರಿಗೆ ಸಲ್ಲಬೇಕು ಎಂಬ ಪ್ರಶ್ನೆ ಎದ್ದಿದೆ. ಧರ್ಮರಾಜ ಧರ್ಮ ಮೂರ್ತಿಯಾದ ಭೀಷ್ಮರನ್ನು ಪ್ರಶ್ನಿಸಿದ್ದಾನೆ. ಆಗ ಭೀಷ್ಮರು ಕೃಷ್ಣನಿಗೇ ಅದು ಸಲ್ಲತಕ್ಕದೆಂದು ನುಡಿಯುತ್ತಾರೆ. ಇಲ್ಲಿಂದ ಕಥೆ ಪ್ರಾರಂಭವಾಗಿದೆ ಮೂಲದಂತೆ ಪದ್ಯ 53 ರಿಂದ ಪ್ರಾರಂಭ.

# शिशुपालवधम्

## चतुर्दशः सर्गः —" अग्रपूजा "

इत्थमत्र विततक्रमे क्रतौ
वीक्ष्य धर्ममथ धर्मजन्मना ।
अर्घदानमनु चोदितो वचः
सभ्यमभ्यधित शन्तनोस्सुतः ॥ १ ॥

आत्मनैव गुणदोषकोविदः
किं न वेत्सि करणीयवस्तुषु ।
यत्तथापि न गुरून्न पृच्छसि
त्वं क्रमोऽयमिति तत्र कारणम् ॥ २ ॥

स्नातकं गुरुमभीष्टमृत्विजं
संयुजा च सह मेदिनीपतिम् ।
अर्धभाज इति कीर्तयन्ति षट्
ते च ते युगपदागताः सदः ॥ ३ ॥

शोभयन्ति परितः प्रतापिनो
मन्त्रशक्तिविनिवारितापदः ।
त्वन्मखं मुखभुवः स्वयम्भुवो
भूभुजश्च परलोकजिष्णवः ॥ ४ ॥

आभजन्ति गुणिनः पृथक्पृथक्
पार्थ सत्कृतिमकृत्रिमाममी ।
एक एव गुणवत्तमोऽथवा
पूज्य इत्ययमपीष्यते विधिः ॥ ५ ॥

अत्र चैष सकलेऽपि भाति मां
प्रत्यशेषगुणबन्धुरर्हति ।
भूमिदेवनरदेवसङ्गमे
पूर्वदेवरिपुरर्हणां हरिः ॥ ६ ॥

मर्त्यमात्रमवदीधरद्भवान्
मैनमानमितदैत्यदानवम् ।

अंश एष जनतातिवर्तिनो
वेधसः प्रतिजनं कृतस्थितेः ॥ ७ ॥

ध्येयमेकमपथे स्थितं धियः
स्तुत्यमुत्तममतीतवाक्पथम् ।
आमनन्ति यमुपास्यमादरा
द्दूरवर्तिनमतीव योगिनः ॥ ८ ॥

पद्मभूरिति सृजन् जगद्रजः
सत्त्वमच्युत इति स्थितिं नयन् ।
संहरन् हर इति श्रितस्तम-
स्त्रैधमेष भजति त्रिभिर्गुणैः ॥ ९ ॥

सर्ववेदिनमनादिमास्थितं
देहिनामनुजिघृक्षया वपुः ।
क्लेशकर्मफलभोगवर्जितं
पुंविशेषममुमीश्वरं विदुः ॥ १० ॥

भक्तिमन्त इह भक्तवत्सले
सन्ततस्मरणरीणकल्मषाः ।
यान्ति निर्वहणमस्य संसृति-
क्लेशनाटकविडम्बना विधेः ॥ ११ ॥

ग्राम्यभावमपहातुमिच्छवो
योगमार्गपतितेन चेतसा ।
दुर्गमेकमपुनर्निवृत्तये
यं विशन्ति वशिनं मुमुक्षवः ॥ १२ ॥

आदितामजननाय देहिना-
मन्ततां च दधतेऽनपायिने ।
बिभ्रते भुवमधः सदाथ च
ब्रह्मणोऽप्युपरि तिष्ठते नमः ॥ १३ ॥

केवलं दधति कर्तृवाचिनः
प्रत्ययानिह न जातु कर्मणि ।
धातवः सृजतिसंहृशास्तयः
स्तौतिरत्र विपरीतकारकः ॥ १४ ॥

पूर्वमेव किल सृष्टवानपः
तासु वीर्यमनिवार्यमादधौ ।
तच्च कारणमभूद्धिरण्मयं
ब्रह्मणोऽसृजदसाविदं जगत् ॥ १५ ॥

मत्कुणाविव पुरा परिप्लवौ
सिन्धुनाथशयने निषेदुषः ।
गच्छतः स्म मधुकैटभौ विभो-
र्यस्य नैद्रसुखविघ्नतां क्षणम् ॥ १६ ॥

श्रौतमार्गसुखगानकोविद-
ब्रह्मषट्चरणगर्भमुज्ज्वलम् ।
श्रीमुखेन्दुसविधेऽपि शोभते
यस्य नाभिसरसीसरोरुहम् ॥ १७ ॥

सत्यवृत्तमपि मायिनं जग-
द्वृद्धमप्युचित निद्रमर्भकम् ।

जन्म बिभ्रतमजं नवं बुधा
यं पुराणपुरुषं प्रचक्षते ॥ १८ ॥

स्कन्धधूननविसारिकेसर-
क्षिप्तसागरमहाप्लवामयम् ।
उद्धृतामिव मुहूर्तमैक्षत
स्थूलनासिकवपुर्वसुन्धराम् ॥ १९ ॥

दिव्यकेसरिवपुः सुरद्विषो
नैव लब्धशममायुधैरपि ।
दुर्निवाररणकण्डु कोमलै-
र्वक्ष एष निरदारयन्नखैः ॥ २० ॥

वारिधेरिव कराग्रवीचिभि-
र्दिङ्मतङ्गजमुखान्यभिघ्नतः ।
यस्य चारुनखशुक्तयः स्फुरन्-
मौक्तिकप्रकरगर्भतां दधुः ॥ २१ ॥

दीप्तिनिर्जितविरोचनादयं
गां विरोचनसुतादभीप्सतः ।
आत्मभूरवरजाखिलप्रजः
स्वर्पतेरवरजत्वमाययौ ॥ २२ ॥

किं क्रमिष्यति किलैष वामनो
यावदित्थमहसन्न दानवाः ।
तावदस्य न ममौ नभस्थले
लङ्घितार्कशशिमण्डलः क्रमः ॥ २३ ॥

गच्छतापि गगनाग्रमुच्चकै-
र्यस्य भूधरगरीयसांघ्रिणा ।
क्रान्तकन्धर इवाबलो बलिः
स्वर्गभर्तुरगमत् सुबन्धतान् ॥ २४ ॥

कामतोऽस्य ददृशुर्दिवौकसो
दूरमूरुमलिनीलभायतम् ।
व्योम्नि दिव्यसरिदम्बु पद्धति-
स्पर्धयेव यमुनौघमुत्थितम् ॥ २५ ॥

यस्य किञ्चिदपकर्तुमक्षमः
कायनिग्रहगृहीतविग्रहः ।
कान्तवक्त्रसदृशाकृतिं कृती
राहुरिन्दुमधुनापि बाधते ॥ २६ ॥

सम्प्रदायविगमादुपेयुषी-
रेष नाशमविनाशिविग्रहः ।
स्मर्तुमप्रतिहतस्मृतिः श्रुती-
र्दत्त इत्यभवदत्रिगोत्रजः ॥ २७ ॥

रेणुकातनयतामुपागतः
शातितप्रचुरपत्रसंहतिः ।
लूनभूरिभुजशाखमुज्झित-
च्छायमर्जुनवनं व्यधादयम् ॥ २८ ॥

एष दशरथिभूयमेत्य च
ध्वंसितोद्धतदशाननामपि ।

राक्षसीमकृतरक्षितप्रज-
स्तेजसाधिकविभीषणां पुरीम् ॥ २९ ॥

निष्प्रहन्तुममरेशविद्विषा-
मर्थितः स्वयमथ स्वयम्भुवा ।
सम्प्रति श्रयति सूनुतामयं
कश्यपस्य वसुदेवरूपिणः ॥ ३० ॥

तात नोदधिविलोडनं प्रति
त्वद्विनाथ वयमुत्सहामहे ।
यः सुरैरिति सुरौघवल्लभो
वल्लवैश्च जगदे जगत्पतिः ॥ ३१ ॥

नात्तगन्धमवधूय शत्रुभि-
श्छायया च शमितामरश्रमम् ।
योऽभिमानमिव वृत्रविद्विषः
पारिजातमुदमूलयद्दिवः ॥ ३२ ॥

यं समेत्य च ललाटलेखया
बिभ्रतः सपदि शम्भुविभ्रमम् ।
चण्डमारुतमिव प्रदीपव-
च्चेदिपस्य निरवाद्विलोचनम् ॥ ३३ ॥

यः कोलतां वल्लवतां च बिभ्र-
द्दंष्ट्रामुदस्याशु भुजां च गुर्वीम् ।
मग्नस्य तोयापदि दुस्तरायां
गोमण्डलस्योद्धरणं चकार ॥ ३४ ॥

धन्योऽसि यस्य हरिरेष समक्ष एव
दूरादपि क्रतुषु यज्वभिरिज्यते यः ।
दत्त्वार्घमत्रभवते भुवनेषु याव-
त्संसारमण्डलमवाप्नुहि साधुवादम् ॥ ३५ ॥

भीष्मोक्तं तदिति वचो निशम्य सम्यक्
साम्राज्यश्रियमधिगच्छता नृपेण ।
दत्तेऽर्घे महति महीभृतां पुरोऽपि
त्रैलोक्ये मधुभिदभूदनर्घ एव ॥ ३६ ॥

इति

श्रीमाघकृतौ शिशुपालवधे महाकाव्ये श्रङ्के श्रीकृष्णार्घदानो नाम
चतुर्दशः सर्गः

ಟಿಪ್ಪಣಿ ಇತ್ಯಾದಿ

1. विततक्रमे=ವಿಸ್ತೃತವಾಗಿ ನಡೆಯುತ್ತಿರಲು.
धर्मात् जन्म यस्य सः तेन= धर्मजन्मना
"जन्माद्युत्तरपदो बहुव्रीहिः व्यधिकरणः" ಎಂಬ ಅನುಶಾಸನದಿಂದ ವ್ಯಧಿಕರಣ ಬಹುವ್ರೀಹಿ.
अर्घः=ಪೂಜಾ ಸಾಮಗ್ರಿ.
"माल्ये पूजाविधावर्घः" ಅಮರ सभ्यं=ಯೋಗ್ಯವಾದುದನ್ನು
"सभायां यः" ಎಂಬುದರಿಂದ य ಪ್ರತ್ಯಯ ; अभ्यर्हित–ಲುಙ್ ಲ ಕಾರ.

2. गुणदोषयोः+कोविदः=गुणदोषकोविदः

| | | | |
|---|---|---|---|
| वेत्ति | वित्तः | विदन्ति | ಲಟ್ |
| वेत्सि | वित्थः | वित्थ | |
| वेद्मि | विद्वः | विद्मः | |

3. संयुज्यत इति = संयुक् + तेन = संयुजा—ಅಳಿಯನೊಂದಿಗೆ
मेदिन्या: + पति: + तं = मेदिनीपतिं
"पतिस्समास एव" ಎಂಬುದರಿಂದ ಹರಿ ಶಬ್ದದಂತೆ ರೂಪ.
सदः—ಸಭೆಯನ್ನು, सत्—ಶಬ್ದದ द्वि.ए.

4, प्रतापयितुं शीलं येषां ते = प्रतापिन: "स प्रताप: प्रभावश्च यत्तेज: कोशदण्डयो: ಅಮರ
मन्त्रशक्त्या विनिवारिता: आपद: येषां ते = मन्त्रशक्तिविनिवारितापद:
वेदे भेदे गुप्तवादे मन्त्र: ಅಮರ
स्वयम्भुव: मुखभुव:—ಬ್ರಾಹ್ಮಣರು
"ब्राह्मणोऽस्य मुखमासीत्"—ಶ್ರುತಿ
त्वन्मुखं परित:—"अभित: परित: समया निकषा हा प्रतियोगेऽपि" ಎಂಬುದರಿಂದ ದ್ವಿತೀಯೆ.

5. सत्कृतिम्—ಸತ್ಕಾರವನ್ನು

6. अशेषगुणबन्धु: — ಸರ್ವಗುಣ ಪರಿಪೂರ್ಣನು
पूर्वदेवरिपु: — ರಾಕ್ಷಸರ ಶತ್ರುವಾದ
" पूर्वदेवा: सुरद्विष: " ಅಮರ

7. आनमिता: दैत्यदानवा: येन स: + तं आनमितदैत्यदानवम्
भवान् मावदी धरत्—"शेषे प्रथम:" ಎಂಬುದರಿಂದ ಪ್ರಥಮ ಪುರುಷ ಬಂದಿದೆ.
जने + जने = प्रतिजनं (ಅವ್ಯಯೀ ಭಾವ)
कृता स्थिति: येन स: + तस्य = कृतस्थिते:

8. ध्यातुं + योग्यं = ध्येयम्
अपथे = ಅಮಾರ್ಗದಲ್ಲಿ .
"अपथं नपुंसकम्" ಎಂಬುದರಿಂದ ನಪುಂಸಕತ್ವ
अतीत: वाक्पथ: येन + तं =अतीतवाक्पथम्
"यतो वाचो निवर्तन्ते" ಶ್ರುತಿ
अतीव—ಅತ್ಯಂತಾರ್ಥದಲ್ಲಿ ಅವ್ಯಯ

10. अनुगृहीतुं इच्छा + तया = अनुजिघृक्षया ; क्लेशकर्मणां फले, तयो: भोग: + तेन + वर्जितम् = क्लेशकर्मफलभोगवर्जितम्
ಕ್ಲೇಶಗಳು ಐದು—
अविद्या, अस्मिता, राग:, द्वेष:, अभि

11. भक्तेषु वत्सलः = भक्तवत्सलः
सन्ततं स्मरणं तेन रीणकल्मषाः = सन्ततस्मरणरीणकल्मषाः
रीण—"री-क्षये" ಧಾತು
संसृतेः क्लेशः तदेव नाटकं तस्य विडम्बनाविधिः + तस्य = संसृति क्लेशनाटक-विडम्बनाविधेः ।

12. मोक्तुं + इच्छवः—मुमुक्षवः
अपुनर्निवृत्तये—ಮರುಹುಟ್ಟನ್ನು ಪಡೆಯದಿರಲು
दुःखेन गम्यत इति तं = दुर्गम् ದೊರಕದ, ಪಡೆಯಲಾಗದ
योगमार्ग पतितेन = ಧ್ಯಾನಮಾರ್ಗ ಮಗ್ನನಾದ
योगस्सन्नहनोपायध्यानसंगतियुक्तिषु ಅಮರ

13. अपायः अस्य अस्तीति=अपायी, सः न—भवतीति + तस्मै = अनपायिने
तिष्ठते नमः — "नमः स्वस्तिस्वाहास्वधालं वषड्योगाच्च" ಎಂಬುದರಿಂದ चतुर्थी

14. सृजतिश्च संहृतिश्च शास्तिश्च = सृजतिसंहतिशास्तयः
"सृजविसर्गे॰हृञ्‌ःहरणे शासु अनुशिष्टौ ಧಾತುಗಳು स्तौतिः — ಸ್ತುತಿ, ಸ್ತೋತ್ರ

15. अनिवार्यम्—ತಡೆಯಲಾಗದ वीर्यम्—ರೇತಸ್ಸನ್ನು
शुक्रं तेजो रेतसी च ಅಮರ
हिरण्यस्य + विकारः = हिरण्मयं
" आप एव ससर्जादौ तासु वीर्यमपासृजत् ।
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।
तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः"

16. परिप्लवौ—ಚಂಚಲರಾದ
"चञ्चलं चपलं तूर्णं पारिप्लव परिप्लवे" ಅಮರ मत्कुणः—ತಿಗಣೆ
सिन्धुनाथः एव शयनं + तस्मिन् = सिन्धुनाथशयने—ಕ್ಷೀರಸಾಗರಶಯನದಲ್ಲಿ
निद्रायाः आगतं तदेव सुखं + तस्य विघ्नतां नैद्रसुखविघ्नताम्—ನಿದ್ರಾಸುಖಭಂಗವನ್ನು

17. श्रौतमार्गस्य सुखगानं तस्य कोविदः स चासौ ब्रह्मा च, सः एव षट्चरणः सः गर्भे यस्य तत् = श्रौतमार्गसुखगानकोविदब्रह्मषट्चरणगर्भम् = ಕಿವಿಗಿಂಪಾದ ವೇದವನ್ನು ಝೇಂಕರಿಸುತ್ತಿರುವ ಚತುರ್ಮುಖನೇ. ದುಂಬಿ ಅವನನ್ನು ಗರ್ಭದಲ್ಲಿ ಪಡೆದಿರುವ
श्रियः मुखमेव इन्दुः तस्य सविधे श्रीमुखेन्दुसविधे ।
नाभिः एव सरसी तस्यां सरोरुहं = नाभिसरसी सरोरुहम् ।
कासारः सरसी सरः ಅಮರ

18. मायी—ಮಾಯಾವಿ, ಕಪಟ ವೃತ್ತಿಯುಳ್ಳವನು

जगद्वृद्धं—ಸರ್ವಲೋಕಪಿತಾಮಹನನ್ನಾಗಿ

"प्रवयाः स्थविरो वृद्धः" ಅಮರ

ವಿರೋಧಾಭಾಸಾಲಂಕಾರ

आभासत्वे विरोधस्य विरोधाभास इष्यते
विनापि तन्वि हारेण वक्षोजो तव हारिणौ । ಎಂಬುದು ಲಕ್ಷಣ.

19. स्कन्धस्य धूननं तेन वि‌ःारिणः, तैः केसरैः क्षिप्तः, स चासौ सागरश्च तस्य महाप्लवः यस्याः ताम् स्कन्धधूननवि ारिकेसरक्षिप्तसागरमहाप्लवाम् ।

सटाः = ಕೇಸರಗಳು स्थूलनासिकवपुः = ವರಾಹರೂಪಿಯಾಗಿ

20. दुर्निवाररणकण्डूः यस्य तत् = दुर्निवाररणकण्डु

21. कराग्राणि वीचयः इव+ताभिः कराग्रवीचिभिः ಉಪಮಿತ ಸಮಾಸ; ದಿಗಂತವ್ಯಾಪ್ತವಾದ ಎಂಬುದು ಭಾವ.

मतङ्गजः — ಆನೆ "मतङ्गजो गजो नागः" ಅಮರ

चारुनखाः शुक्तयः इव ಉಪಮಿತ ಸಮಾಸ शुक्तिः = ಕಪ್ಪೆಚಿಪ್ಪು

स्फुरन्मौक्तिकप्रसरः गर्भे यासां तासां भावः ताम् = स्फुरन्मौक्तिकप्रसरगर्भताम् ।

22. दीप्त्या निर्जितः विरोचनः यस्मात् = दीप्तिनिर्जितविरोचनात्—ಇಲ್ಲಿ ವಿರೋಚನ ಶಬ್ದವು ಶ್ಲಿಷ್ಟ. ಪ್ರಹ್ಲಾದಪುತ್ರ, ಸೂರ್ಯ ಎಂದು ಅರ್ಥ.

"विरोचनेऽर्के दहने चन्द्रे प्रह्लादनन्दने" ವಿಶ್ವಕೋಶ

विरोचनसुतात् = ಬಲಿಚಕ್ರವರ್ತಿಯಿಂದ

अवरजाः, अखिलाः प्रजाः यस्य सः = अवरजाखिलप्रजः

अवरजत्वं = ತಮ್ಮನಾಗು‌ಕೆಯನ್ನು

ಈ ಪದ್ಯದಲ್ಲಿ ವಿರೋಧಾಭಾಸವಿದೆ.

23 वामनः—ವಾಮನಾವತಾರಿ, ಕುಬ್ಜ

"खर्वो ह्रस्वश्च वामनः" —ಅಮರ.

ಈ ಪದ್ಯದಲ್ಲಿ ಆಧಾರವಾದ ಆಕಾಶಕ್ಕಿಂತ ಆಧೇಯವಾದ ಪಾದಕ್ರಮಣಕ್ಕೆ ಆಧಿಕ್ಯವನ್ನು ಪ್ರತಿಪಾದಿಸಿದೆ. ಆ ಕಾರಣ ಅಧಿಕಾಲಂಕಾರ.

"आश्रयाश्रयिणोराधिक्यम् धिकम्"—ಲಕ್ಷಣ.

24 गगनाग्रम्—ಮುಗಿಲಿಗಿಂತ ಔನ್ನತ್ಯವನ್ನು
भूधरात् गरीयान् तेन—भूधरगरीयसा। उच्चकैः—ಉನ್ನತವಾದ.

25 अलिनीलं—ದುಂಬಿಯಂತೆ ಕಪ್ಪಾದ.
दिव्यसरितः अम्बूनि तेषां पद्धतिः—दिव्यसरिदम्बुपद्धतिः।

26 गृहीतविग्रहः—ವೈರಬೆಳೆಸಿದ.
कान्तं च तत् वक्त्रं च तेन सदृशी आकृतिः यस्य तं-कान्तवक्त्रसदृशाकृतिम्—ಹರಿಯ ಸುಂದರ ವದನಕ್ಕೆ ಸಮನಾದ ಆಕಾರವುಳ್ಳ.
ಈ ಪದ್ಯದಲ್ಲಿ ಪ್ರತ್ಯನೀಕಾಲಂಕಾರವಿದೆ.
'प्रत्यनीकं बलवतः शत्रोः पक्षे पराक्रमः' ಎಂಬುದು ಲಕ್ಷಣ. ರಾಹುವಿಗೆ ಸಾಕ್ಷಾತ್ಪ್ರತಿಕಕ್ಷಿಯಾದವನು ಶ್ರೀಹರಿ. ಅವನ ಮೇಲೆ ವೈರವನ್ನು ಸಾಧಿಸಲು ಅಶಕ್ತನಾದ ರಾಹುವು ಹರಿಸದೃಶವಾದ ಚಂದ್ರನ ಮೇಲೆ ವೈರವನ್ನು ಸಾಧಿಸುತ್ತಿದ್ದಾನೆ ಎಂದು ಲಕ್ಷಣ ಸಮನ್ವಯ.

27 अप्रतिहता स्मृतिः यस्य सः-अप्रतिहतस्मृतिः; सम्प्रदायस्य विगमः, तस्मात्—सम्प्रदाय-विगमात्—ಉಪದೇಶ ಪರಂಪರೆಯ ನಾಶದಿಂದ.
स्मर्तुम्—ಮುನ್ನಡೆಯುವಂತೆ ಮಾಡಲು.

28 अर्जुनः—ಇಲ್ಲಿ ಕಾರ್ತವೀರ್ಯಾರ್ಜುನ.
अर्जुनः ककुभे पार्थे कार्तवीर्ये मयूरयोः ಪರಶುರಾಮನಿಗೆ ವಿರೋಧಿಯಾದುದರಿಂದ ಇಲ್ಲಿ ಕಾರ್ತವೀರ್ಯಾರ್ಜುನನೆಂದೇ ಗ್ರಹಿಸಬೇಕು.
"संयोगो विप्रयोगश्च साहचर्यं विरोधिता" ಎಂಬ ಹರಿಕಾರಿಕೆ ವಿಶೇಷ ಸ್ಮೃತಿಗೆ ಕಾರಣ.

शातिताः प्रचुराः च पत्रसंहतिः यस्य तत् शातितप्रचुरपत्रसंहति।
ಈ ಪದದಲ್ಲಿ पत्रसंहति ಎಂಬ ಪದಕ್ಕೆ, ವಾಹನ ಸಮೂಹ, ಎಲೆಗಳ ಗುಂಪು ಎಂದು ಶ್ಲೇಷೆಯಿಂದ ಅರ್ಥ ಹೇಳಬೇಕು.
"पत्रं स्याद्वाहने विश्वे" ವಿಶ್ವಕೋಶ.

लूनाः भूरयः भुजाः एव शाखाः यस्य तत्—लून भूरिभुजशाखम्।
उज्झिता छाया यस्य तत्—उज्झितच्छायं। ಇಲ್ಲಿ छाया ಶಬ್ದಕ್ಕೆ ಕಾಂತಿ, ನೆಳಲು ಎಂದು ಎರಡರ್ಥ.

"छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः ಎಂದು ಅಮರ.
ಈ ಪದ್ಯದಲ್ಲಿ ಸಾವಯವ ರೂಪಕಾಲಂಕಾರವಿದೆ. ಅದು ಶ್ಲೇಷ ಸಮ್ಮಿಶ್ರವಾಗಿದೆ.

29 दाशरथेः भावः—दाशारथि भूयं । "भुवो भावे" ಎಂಬ ಅನುಶಾಸನದಿಂದ ಕ್ಯಪ್ ಪ್ರತ್ಯಯ ಬಂದಿದೆ, ರಾಮುತ್ವವನ್ನು

ध्वंसितः उद्धतः दशाननः यस्यां तां—ध्वंसितोद्धतदशाननां ।

अधिकविभीषणं ಇಲ್ಲಿ विभीषण ಶಬ್ದವು ಶ್ಲಿಷ್ಟ. ಅತ್ಯಂತ ಭಯಂಕರವನ್ನಾಗಿ, ವಿಭೀಷಣನುಳ್ಳದ್ದಾಗಿ (ವಿಭೀಷಣ–ರಾವಣನ ತಮ್ಮ) ವಿರೋಧಾಭಾಸ ಅಲಂಕಾರ.

30 अमरेशविद्विषाम्–ಶಿಶುಪಾಲಾದಿಗಳನ್ನು अमरेशविद्विषां निष्प्रहन्तुम्–ಕರ್ಮಣಿ ಷಷ್ಠೀ.

31 वल्लवैः—ಗೋಪಾಲಕರೊಡನೆ उदधिविलोडनम्—ಸಮುದ್ರ ಮಥನ.
त्वद्विना—ನಿನ್ನನ್ನುಳಿದು.

32 नात्तगन्धम्—ವಾಸನೆ ನೋಡದ, ತಿರಸ್ಕರಿಸಲ್ಪಡದ
"आत्तगन्धोऽभिभूतः स्यात्—ಅಮರ
छायया—ನೆರಳಿನಿಂದ, ರಕ್ಷಣೆಯಿಂದ.
छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितोः" पालनोत्कर्षयोः—ವಿಶ್ವಕೋಶ
ಶ್ಲೇಷಾಲಂಕಾರ.

34 कोलताम्—ವರಾಹತ್ವವನ್ನು,
"वराहः सूकरो घृष्टिःकोलः पोत्री किरिः किटिः—ಅಮರ.
गोमण्डलस्य—ಭೂಮಂಡಲದ ; ಧೇನುಸಮೂಹದ.

35 धनं + लब्धः–धन्यः—ಪುಣ್ಯಶಾಲಿ.
"सुकृती पुण्यवान् धन्यः—ಅಮರ.
धनगणं लब्धा ಎಂಬುದರಿಂದ यत् ಪ್ರತ್ಯಯ.
यज्वभिः – ಯಾಗ ಮಾಡುವವರಿಂದ
"यज्वा तु विधिनेष्टवान्" ಅಮರ.

## ಪ್ರಶ್ನೆಗಳು

1) ಹರಿಯೇ ಅಗ್ರಪೂಜೆಗೆ ಅರ್ಹನೆಂದು ಹೇಳುವ ಮೊದಲು ಪೀಠಿಕಾರೂಪವಾಗಿ ಭೀಷ್ಮನು ಏನು ಹೇಳಿದನು? (1–5)
2) ಸೃಷ್ಟಿ-ಸ್ಥಿತಿ-ಲಯಗಳು ತ್ರಿಮೂರ್ತಿ ಸ್ವರೂಪನಾದ ಏಕೈಕ ಪುರಾಣ ಪುರುಷನ ತ್ರಿವಿಧ ಕ್ರಿಯೆಯೆಂಬುದನ್ನು ಕವಿ ಹೇಗೆ ವರ್ಣಿಸಿದ್ದಾನೆ ? (6–13)
3) ವಿಷ್ಣುವಿನ ನಾನಾ ಅವತಾರಗಳು ಹಾಗೂ ಅವುಗಳ ಪ್ರಯೋಜನವೇನು ತಿಳಿಸಿ.

# ಕಾಳಿದಾಸನ — ಮೇಘದೂತ

## ಪೂರ್ವಮೇಘ

ಕಾಳಿದಾಸ—

ಕಾಳಿದಾಸನು ವಿಶ್ವದ ಮಹಾಕವಿ. ಅವನಂತೆ ಕಾವ್ಯ ಬರೆಯುವ ಕವಿಗಳು ವಿರಳ. ಆದರೂ ಅವನ ವಿಷಯವು ಅಷ್ಟಾಗಿ ತಿಳಿದು ಬಂದಿಲ್ಲ. ಪೌರ್ವಾತ್ಯರ ದೃಷ್ಟಿಯಲ್ಲಿ ಕವಿಯು ವಿಕ್ರಮಾದಿತ್ಯನ ಆಸ್ಥಾನದ ನವಮಣಿಗಳಲ್ಲಿ ಒಬ್ಬನಾಗಿದ್ದನು. ಆದರೆ ಪಾಶ್ಚಿಮಾತ್ಯರ ದೃಷ್ಟಿಯಲ್ಲಿ ಕವಿ ಇಮ್ಮಡಿ ವಿಕ್ರಮಾದಿತ್ಯನ ಕಾಲದಲ್ಲಿದ್ದವನು. ಕ್ರಿ. ಶ. ಆರನೆಯ ಶತಮಾನಕ್ಕೆ ಮುಂಚೆಯೇ ಕವಿಯು ಪ್ರಸಿದ್ಧನಾಗಿದ್ದನೆಂದು ಐಹೊಳೆಯ ಶಾಸನವು ಸಾರುತ್ತದೆ. ಆ ಕಾರಣ ಕವಿಯ ಕಾವ್ಯವು ಬಹುಶಃ ಕ್ರಿ. ಶ. 4–5 ನೆಯ ಶತಮಾನಗಳ ಮಧ್ಯ ಭಾಗವಿರಬಹುದು.

ಕವಿಯ ದೇಶವೂ ಸಂಶಾಯಾಸ್ಪದವೇ. ಆಂತರಿಕ ಕಾರಣಗಳಿಂದ ಕೆಲವರು ಅವನನ್ನು ಕಾಶ್ಮೀರಿಯೆಂದೂ, ಹಲವರು ಆಂಧ್ರದವನೆಂದೂ, ಮತ್ತೆ ಕೆಲವರು ಕೇರಳದವನೆಂದೂ ಹೇಳುತ್ತಾರೆ. ಆದರೆ ಮೇಘ-ಸಂದೇಶದಲ್ಲಿ ಕವಿಯು ಮೇಘಕ್ಕೆ ಬಳಸು ದಾರಿಯಾಗಿದ್ದರೂ ಉಜ್ಜಯಿನಿಯನ್ನು ಕಾಣದಿರಬೇಡ ಎಂದು ನುಡಿದು, ಉಜ್ಜಯಿನಿಯನ್ನು ಮನಸಾರೆ ಬಣ್ಣಿಸಿದ್ದಾನೆ. ಆ ಕಾರಣ ಕವಿಯು ಅವಂತಿ ದೇಶದ ಉಜ್ಜಯಿನಿಯವನಿರಬಹುದು.

ಕವಿಯ ಹೆಸರಿನಲ್ಲಿ ಅನೇಕ ಕಾವ್ಯಗಳಿವೆ. ಆದರೂ ಅವನವೇ ಎಂದು ನಿರ್ಣೀತವಾಗಿರುವುವು ಆರು ಮಾತ್ರ. ರಘುವಂಶ, ಕುಮಾರಸಂಭವಗಳು ಮಹಾಕಾವ್ಯಗಳು. ಶಾಕುಂತಲ, ವಿಕ್ರಮೋರ್ವಶಿಯ, ಮಾಲವಿಕಾಗ್ನಿಮಿತ್ರ—ನಾಟಕಗಳು, ಮೇಘದೂತಂ—ಖಂಡಕಾವ್ಯ.

ಋತುಸಂಹಾರವೂ ಇವನದೆಂದು ಹಲವರ ಎಣಿಕೆ.

ಶೃಂಗಾರ ಪ್ರಕಾಶ, ಸಾಹಿತ್ಯಮೀಮಾಂಸ, ಔಚಿತ್ಯ ವಿಚಾರ ಚರ್ಚೆಗಳಲ್ಲಿ ಇವನು ಕುಂತಲೇಶ್ವರ ದೌತ್ಯವೆಂಬ ಮತ್ತೊಂದು ಮಹಾಕಾವ್ಯವನ್ನು ಬರೆದಂತೆ ಉಲ್ಲೇಖವುಂಟು. ಕಾರ್ತಿಕ ಶುಕ್ಲ ದ್ವಾದಶಿಯನ್ನು ಕಾಳಿದಾಸ ಜಯಂತಿ ಎಂದು ಆಚರಿಸುವ ವಾಡಿಕೆಯುಂಟು.

ಕವಿಯ ಕಾವ್ಯಗಳೆಲ್ಲ ಸರಳವಾದ ವೈದರ್ಭ ಶೈಲಿಯಲ್ಲಿವೆ ವರ್ಣನಾ ವಿನ್ಯಾಸ, ಪಾತ್ರ ಪರಿಪೋಷಣೆ, ಹಿತಮಿತವಾದ ಅಲಂಕಾರಗಳ ಬಳಕೆಗಳಲ್ಲಿ ಕವಿಯನ್ನು ಸರಿಗಟ್ಟುವರಿಲ್ಲ. ಉಪಮಾಲಂಕಾರದಲ್ಲಿ ಒಲವು ಹೆಚ್ಚು ಎಂದೇ "उपमा कालिदासस्य" ಎಂಬ ಮಾತು ವಿಶ್ವ ವಿಖ್ಯಾತ.

# कालिदासकृतं—मेघदूतम्

## पूर्वमेघः

कश्चित्कान्ताविरहगुरुणा स्वाधिकारात्प्रमत्तः
शापेनास्तं गमितमहिमा वर्षभोग्येण भर्तुः ।
यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ॥ १ ॥

तस्मिन्नद्रौ कतिचिदबलाविप्रयुक्तः स कामी
नीत्वा मासान् कनकवलयभ्रंशरिक्तप्रकोष्ठः ।
आषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानुं
वप्रक्रीडापरिणतगजप्रेक्षणीयं ददर्श ॥ २ ॥

तस्य स्थित्वा कथमपि पुरः कौतुकाधानहेतोः
अन्तर्बाष्पश्चिरमनुचरो राजराजस्य दध्यौ ।
मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः
कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे ॥ ३ ॥

प्रत्यासन्ने नभसि दयिताजीवितालम्बनार्थी
जीमूतेन स्वकुशलमयीं हारयिष्यन्प्रवृत्तिम् ।
स प्रत्यग्रैः कुटजकुसुमैः कल्पितार्घाय तस्मै
प्रीतः प्रीतिप्रमुखवचनं स्वागतं व्याजहार ॥ ४ ॥

धूमज्योतिःसलिलमरुतां संनिपातः क्व मेघः
सन्देशार्थाः क्व पटुकरणैः प्राणिभिः प्रापणीयाः ।

इत्यौत्सुक्यादपरिगणयन्गुह्यकस्तं ययाचे
कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु ॥ ५ ॥

जातं वंशे भुवनविदिते पुष्करावर्तकानां
जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः ।
तेनार्थित्वं त्वयि विधिवशाद् दूरबन्धुर्गतोऽहं
याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा ॥ ६ ॥

सन्तप्तानां त्वमसि शरणं तत्पयोद प्रियायाः
सन्देशं मे हर धनपतिक्रोधविश्लेषितस्य ।
गन्तव्या ते वसतिरलका नाम यक्षेश्वराणां
बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या ॥ ७ ॥

त्वामारूढं पवनपदवीमुद्गृहीतालकान्ताः
प्रेक्षिष्यन्ते पथिकवनिताः प्रत्ययादाश्वसन्त्यः ।
कः सन्नद्धे विरहविधुरां त्वय्युपेक्षेत जायां
न स्यादन्योऽप्यहमिव जनो यः पराधीनवृत्तिः ॥ ८ ॥

मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वां
वामश्चायं नदति मधुरं चातकस्ते सगन्धः ।
गर्भाधानक्षणपरिचयान्नूनमाबद्धमालाः
सेविष्यन्ते नयनसुभगं खे भवन्तं बलाकाः ॥ ९ ॥

तां चावश्यं दिवसगणनातत्परामेकपत्नी-
मव्यापन्नामविहतगतिर्द्रक्ष्यसि भ्रातृजायाम् ।
आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां
सद्यःपाति प्रणयि हृदयं विप्रयोगे रुणद्धि ॥ १० ॥

कर्तुं यच्च प्रभवति महीमुच्छिलीन्ध्रामवन्ध्यां
तत् श्रुत्वा ते श्रवणसुभगं गर्जितं मानसोत्काः ।
आकैलासाद्बिसकिसलयच्छेदपाथेयवन्तः
सम्पत्स्यन्ते नभसि भवतो राजहंसाः सहायाः ॥ ११ ॥

आपृच्छस्व प्रियसखममुं तुङ्गमालिङ्ग्य शैलं
वन्द्यैः पुंसां रघुपतिपदैरङ्कितं मेखलासु ।
काले काले भवति भवतो यस्य संयोगमेत्य
स्नेहव्यक्तिश्चिरविरहजं मुञ्चतो बाष्पमुष्णम् ॥ १२ ॥

मार्गं तावत्शृणु कथयतस्त्वत्प्रयाणानुरूपं
सन्देशं मे तदनु जलद श्रोष्यसि श्रोत्रपेयम् ।
खिन्नः खिन्नः शिखरिषु पदं न्यस्य गन्तासि यत्र
क्षीणः क्षीणः परिलघु पयः स्रोतसां चोपभुज्य ॥ १३ ॥

अद्रेः शृङ्गं हरति पवनः किंस्विदित्युन्मुखीभिः
दृष्टोत्साहश्चकितचकितं मुग्धसिद्धाङ्गनाभिः ।
स्थानादस्मात्सरसनिचुलादुत्पतोदङ्मुखः खं
दिङ्नागानां पथि परिहरन् स्थूलहस्तावलेपान् ॥ १४ ॥

रत्नच्छायाव्यतिकर इव प्रेक्ष्यमेतत्पुरस्ता-
द्वल्मीकाग्रात्प्रभवति धनुःखण्डमाखण्डलस्य ।
येन श्यामं वपुरतितरां कान्तिमापत्स्यते ते
बर्हेणेव स्फुरितरुचिना गोपवेषस्य विष्णोः ॥ १५ ॥

त्वय्यायत्तं कृषिफलमिति भ्रूविलासानभिज्ञैः
प्रीतिस्निग्धैर्जनपदवधूलोचनैः पीयमानः ।

सद्यः सीरोत्कषणसुरभि क्षेत्रमारुह्य मालं
किञ्चित्पश्चाद्व्रज लघुगतिर्भूय एवोत्तरेण ॥ १६ ॥

त्वामासारप्रशमितवनोपप्लवं साधु मूर्ध्ना
वक्ष्यत्यध्वश्रमपरिगतं सानुमानाम्रकूटः ।
न क्षुद्रोऽपि प्रथमसुकृतापेक्षया संश्रयाय
प्राप्ते मित्रे भवति विमुखः किं पुनर्यस्तथोच्चैः ॥ १७ ॥

स्थित्वा तस्मिन्वनचरवधूभुक्तकुञ्जे मुहूर्तं
तोयोत्सर्गद्रुततरगतिस्तत्परं वर्त्म तीर्णः ।
रेवां द्रक्ष्यस्युपलविषमे विन्ध्यपादे विशीर्णां
भक्तिच्छेदैरिव विरचितां भूतिमङ्गे गजस्य ॥ १८ ॥

तस्यास्तिक्तैर्वनगजमदैर्वासितं वान्तवृष्टिः
जम्बूकुञ्जप्रतिहतरयं तोयमादाय गच्छेः
अन्तस्सारं घन तुलयितुं नानिलः शक्ष्यति त्वां
रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय ॥ १९ ॥

नीपं दृष्ट्वा हरितकपिशं केसरैरर्धरूढै
राविर्भूतप्रथममुकुला कन्दलीश्चानुकच्छम् ।
जग्ध्वारण्येष्वधिकसुरभिं गन्धमाघ्राय चोर्व्याः
सारङ्गास्ते जललवमुचः सूचयिष्यन्ति मार्गम् ॥ २० ॥

उत्पश्यामि द्रुतमपि सखे मत्प्रियार्थं यियासोः
कालक्षेपं ककुभसुरभौ पर्वते पर्वते ते ।
शुक्लापाङ्गैः सजलनयनैः स्वागतीकृत्य केकाः
प्रत्युद्यातः कथमपि भवान् गन्तुमाशु व्यवस्येत् ॥ २१ ॥

पाण्डुच्छायोपवनवृतयः केतकैस्सूचिभिन्न-
नींडारम्भैर्गृहबलिभुजामाकुलग्रामचैत्याः ।
त्वय्यासन्ने परिणतफलश्यामजम्बूवनान्ताः
सम्पत्स्यन्ते कतिपयदिनस्थायिहंसा दशार्णाः ॥ २२ ॥

तेषां दिक्षु प्रथितविदिशालक्षणां राजधानीं
गत्वा सद्यः फलमविकलं कामुकत्वस्य लब्ध्वा ।
तीरोपान्तस्तनितसुभगं पास्यसि स्वादु यस्याः
सभ्रूभङ्गं मुखमिव पयो वेत्रवत्याश्चलोर्मि ॥ २३ ॥

नीचैराख्यं गिरिमधिवसेस्तत्र विश्रामहेतोः
त्वत्सम्पर्कात्पुलकितमिव प्रौढपुष्पैः कदम्बैः ।
यः पण्यस्त्रीरतिपरिमलोद्गारिभिर्नागराणा-
मुद्दामानि प्रथयति शिलावेश्मभिर्यौवनानि ॥ २४ ॥

विश्रान्तस्सन् व्रज वननदीतीरजानां निषिञ्चन्
उद्यानानां नवजलकणैर्यूथिकाजालकानि ।
गण्डस्वेदापनयनरुजाक्लान्तकर्णोत्पलानां
छायादानात्क्षणपरिचितः पुष्पलावीमुखानाम् ॥ २५ ॥

वक्रः पन्था यदपि भवतः प्रस्थितस्योत्तराशां
सौधोत्सङ्गप्रणयविमुखो मा स्म भूरुज्जयिन्याः ।
विद्युद्दामस्फुरितचकितैस्तत्र पौराङ्गनानां
लोलापाङ्गैर्यदि न रमसे लोचनैर्वञ्चितोऽसि ॥ २६ ॥

वीचिक्षोभस्तनितविहगश्रेणिकाञ्चीगुणायाः
संसर्पन्त्याः स्खलितसुभगं दर्शितावर्तनाभेः ।

निर्विन्ध्यायाः पथि भव रसाभ्यन्तरः सन्निपत्य
स्त्रीणामाद्यं प्रणयवचनं विभ्रमो हि प्रियेषु ॥ २७ ॥

वेणीभूतप्रतनुसलिला तामतीतस्य सिन्धुः
पाण्डुच्छाया तटरुहतरुभ्रंशिभिर्जीर्णपर्णैः ।
सौभाग्यं ते सुभग विरहावस्थया व्यञ्जयन्ती
कार्श्यं येन त्यजति विधिना स त्वयैवोपपाद्यः ॥ २८ ॥

प्राप्यावन्तीनुदयनकथाकोविदग्रामवृद्धान्
पूर्वोद्दिष्टामनुसर पुरीं श्रीविशालां विशालाम् ।
स्वल्पीभूते सुचरितफले स्वर्गिणां गां गतानां
शेषैः पुण्यैर्हृतमिव दिवः कान्तिमत्खण्डमेकम् ॥ २९ ॥

दीर्घीकुर्वन् पटु मदकलं कूजितं सारसानां
प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः ।
यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः
शिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः ॥ ३० ॥

प्रद्योतस्य प्रियदुहितरं वत्सराजोऽत्र जह्रे
हैमं तालद्रुमवनमभूदत्र तस्यैव राज्ञः ।
अत्रोद्भ्रान्तः किल नलगिरिः स्तम्भमुत्पाट्य दर्पा-
दित्यागन्तून्रमयति जनो यत्र बन्धूनभिज्ञः ॥ ३१ ॥

जालोद्गीर्णैरुपचितवपुः केशसंस्कारधूपै-
र्बन्धुप्रीत्या भवनशिखिभिर्दत्तनृत्योपहारः ।
हर्म्येष्वस्याः कुसुमसुरभिष्वध्वखेदं नयेथाः
लक्ष्मीं पश्यंल्ललितवनितापादरागाङ्कितेषु ॥ ३२ ॥

भर्तुः कण्ठच्छविरिति गणैः सादरं वीक्ष्यमाणः
पुण्यं यायास्त्रिभुवनगुरोर्धाम चण्डीश्वरस्य ।
धूतोद्यानं कुवलयरजोगन्धिभिर्गन्धवत्याः
तोयक्रीडानिरतयुवतिस्नानतिक्तैर्मरुद्भिः ॥ ३३ ॥

अप्यन्यस्मिन् जलधर महाकालमासाद्य काले
स्थातव्यं ते नयनविषयं यावदत्येति भानुः ।
कुर्वन् सन्ध्याबलिपटहतां शूलिनः श्लाघनीया-
मामन्द्राणां फलमविकलं लप्स्यसे गर्जितानाम् ॥ ३४ ॥

पादन्यासैः क्वणितरशनास्तत्र लीलावधूतैः
रत्नच्छायाखचितवलिभिश्चामरैः क्लान्तहस्ताः ।
वेश्यास्त्वत्तो नखपदसुखान्प्राप्य वर्षाग्रबिन्दू-
नामोक्ष्यन्ते त्वयि मधुकरश्रेणिदीर्घान् कटाक्षान् ॥ ३५ ॥

पश्चादुच्चैर्भुजतरुवनं मण्डलेनाभिलीनः
सान्ध्यं तेजः प्रतिनवजपापुष्परक्तं दधानः ।
नृत्यारम्भे हर पशुपतेरार्द्रनागाजिनेच्छां
शान्तोद्वेगस्तिमितनयनं दृष्टभक्तिर्भवान्या ॥ ३६ ॥

गच्छन्तीनां रमणवसतिं योषितां तत्र नक्तं
रुद्धालोके नरपतिपथे सूचिभेद्यैस्तमोभिः ।
सौदामिन्या कनकनिकषस्निग्धया दर्शयोर्वीं
तोयोत्सर्गस्तनितमुखरो मा स्म भूर्विक्लवास्ताः ॥ ३७ ॥

तां कस्याञ्चिद्भवनवलभौ सुप्तपारावतायां
नीत्वा रात्रिं चिरविलसनात् खिन्नविद्युत्कलत्रः ।

दृष्टे सूर्ये पुनरपि भवान्वाहयेदध्वशेषं
मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः ॥ ३८ ॥

तस्मिन्काले नयनसलिलं योषितां खण्डितानां
शान्ति नेयं प्रणयिभिरतो वर्त्म भानोस्त्यजाशु ।
प्रालेयास्रं कमलवदनात्सोऽपि हर्तुं नलिन्याः
प्रत्यावृत्तस्त्वयि कररुधि स्यादनल्पाभ्यसूयः ॥ ३९ ॥

गम्भीरायाः पयसि सरितश्चेतसीव प्रसन्ने
छायात्मापि प्रकृतिसुभगो लप्स्यते ते प्रवेशम् ।
तस्मादस्याः कुमुदविशदान्यर्हसि त्वं न धैर्यात्
मोघीकर्तुं चटुलशफरोद्वर्तनप्रेक्षितानि ॥ ४० ॥
तस्याः ---- ज्ञातास्वादो विवृतजघना
त्वन्निष्यन्दोच्छ्वसितवसुधागन्धसम्पर्करम्यः
स्रोतोरन्ध्रध्वनितसुभगं दन्तिभिः पीयमानः ।
नीचैर्वास्यत्युपजिगमिषोर्देवपूर्वं गिरिं ते
शीतो वायुः परिणमयिता काननोदुम्बराणाम् ॥ ४१ ॥

तत्र स्कन्दं नियतवसतिं पुष्पमेघीकृतात्मा
पुष्पासारैः स्नपयतु भवान् व्योमगङ्गाजलार्द्रैः ।
रक्षाहेतोर्नवशशिभृता वासवीनां चमूना-
मत्यादित्यं हुतवहमुखे संभृतं तद्धि तेजः ॥ ४२ ॥

ज्योतिर्लेखावलयि गलितं यस्य बर्हं भवानी
पुत्रप्रेम्णा कुवलयदलप्रापि कर्णे करोति ।
धौतापाङ्गं हरशशिरुचा पावकेस्तं मयूरं
पश्चादद्रिग्रहणगुरुभिर्गर्जितैर्नर्तयेथाः ॥ ४३ ॥

आराध्यैनं शरवणभवं देवमुल्लङ्घिताध्वा
सिद्धद्वन्द्वैर्जलकणभयाद्वीणिभिर्मुक्तमार्गः ।
व्यालम्बेथाः सुरभितनयालम्भजां मानयिष्यन्
स्रोतोमूर्त्या भुवि परिणतां रन्तिदेवस्य कीर्तिम् ॥ ४४ ॥

त्वय्यादातुं जलमवनते शार्ङ्गिणो वर्णचौरे
तस्याः सिन्धोः पृथुमपि तनुं दूरभावात्प्रवाहम् ।
प्रेक्षिष्यन्ते गगनगतयो नूनमावर्ज्य दृष्टी-
रेकं मुक्तागुणमिव भुवः स्थूलमध्येन्द्रनीलम् ॥ ४५ ॥

तामुत्तीर्य व्रज परिचितभ्रूलताविभ्रमाणां
पक्ष्मोत्क्षेपादुपरिविलसत्कृष्णशारप्रभाणाम् ।
कुन्दक्षेपानुगमधुकरश्रीमुषामात्मबिम्बं
पात्रीकुर्वन् दशपुरवधूनेत्रकौतूहलानाम् ॥ ४६ ॥

ब्रह्मावर्तं जनपदमथ च्छायया गाहमानः
क्षेत्रं क्षत्रप्रधनपिशुनं कौरवं तद्भजेथाः ।
राजन्यानां शितशरशतैर्यत्र गाण्डीवधन्वा
धारापातैस्त्वमिव कमलान्यभ्यवर्षन्मुखानि ॥ ४७ ॥

हित्वा हालामभिमतरसां रेवतीलोचनाङ्कां
बन्धुप्रीत्या समरविमुखो लाङ्गली याः सिषेवे ।
कृत्वा तासामभिगममपां सौम्य सारस्वतीना-
मन्तश्शुद्धस्त्वमसि भविता वर्णमात्रेण कृष्णः ॥ ४८ ॥

तस्माद्गच्छेरनुकनखलं शैलराजावतीर्णां
जह्नोः कन्यां सगरतनयस्वर्गसोपानपङ्क्तिम् ।

गौरीवक्त्रभ्रुकुटिरचनां या विहस्येव फेनैः
शम्भोः केशग्रहणमकरोदिन्दुलग्नोर्मिहस्ता ॥ ४९ ॥

तस्याः पातुं सुरगज इव व्योम्नि पश्चार्धलम्बी
त्वं चेदच्छस्फटिकविशदं तर्कयेस्तिर्यगम्भः ।
संसर्पन्त्या सपदि भवतः स्रोतसि च्छाययासौ
स्यादस्थानोपगतयमुनासङ्गमेवाभिरामा ॥ ५० ॥

आसीनानां सुरभितशिलं नाभिगन्धैर्मृगाणां
तस्या एव प्रभवमचलं प्राप्य गौरं तुषारैः ।
वक्ष्यस्यध्वश्रमविनयने तस्य शृङ्गे निषण्णः
शोभां शुभ्रत्रिनयनवृषोत्खातपङ्कोपमेयाम् ॥ ५१ ॥

तं चेद्वायौ सरति सरलस्कन्धसंघट्टजन्मा
बाधेतोल्काक्षपितचमरीवालभारो दवाग्निः ।
अर्हस्येनं शमयितुमलं वारिधारासहस्रै-
रापन्नार्तिप्रशमनफलाः सम्पदो ह्युत्तमानाम् ॥ ५२ ॥

ये संरम्भोत्पतनरभसाः स्वाङ्गभङ्गाय तस्मि-
न्मुक्ताध्वानं सपदि शरभा लंघयेयुर्भवन्तम् ।
तान् कुर्वीथास्तुमुलकरकावृष्टिपातावकीर्णान्
के वा न स्युः परिभवपदं निष्फलारम्भयत्नाः ॥ ५३ ॥

तत्र व्यक्तं दृषदि चरणन्यासमर्धेन्दुमौलेः
शश्वत्सिद्धैरुपचितबलिं भक्तिनम्रः परीयाः ।
यस्मिन् दृष्टे करणविगमादूर्ध्वमुद्धूतपापाः
सङ्कल्पन्ते स्थिरगणपदप्राप्तये श्रद्दधानाः ॥ ५४ ॥

शब्दायन्ते मधुरमनिलैः कीचकाः पूर्यमाणाः
संसक्ताभिस्त्रिपुरविजयो गीयते किन्नरीभिः ।
निर्ह्रादस्ते मुरज इव चेत्कन्दरेषु ध्वनिः स्या-
त्सङ्गीतार्थो ननु पशुपतेस्तत्र भावी समग्रः ॥ ५५ ॥

प्रालेयाद्रेरुपतटमतिक्रम्य तांस्तान्विशेषान्
हंसद्वारं भृगुपतियशोवर्त्म यत्क्रौञ्चरन्ध्रम् ।
तेनोदीचीं दिशमनुसरेस्तिर्यगायामशोभी
श्यामः पादो बलिनियमनाभ्युद्यतस्येव विष्णोः ॥ ५६ ॥

गत्वा चोर्ध्वं दशमुखभुजोच्छ्वासितप्रस्थसन्धेः
कैलासस्य त्रिदशवनितादर्पणस्यातिथिः स्याः ।
शृङ्गोच्छ्रायैः कुमुदविशदैर्यो वितत्य स्थितः खं
राशीभूतः प्रतिदिनमिव त्र्यम्बकस्याट्टहासः ॥ ५७ ॥

उत्पश्यामि त्वयि तटगते स्निग्धभिन्नाञ्जनाभे
सद्यः कृत्तद्विरददशनच्छेदगौरस्य तस्य ।
शोभामद्रेः स्तिमितनयनप्रेक्षणीयां भवित्रीं
अंसन्यस्ते सति हलभृतो मेचके वाससीव ॥ ५८ ॥

हेमाम्भोजप्रसवि सलिलं मानसस्याददानः
कुर्वन्कामं क्षणमुखपटप्रीतिमैरावतस्य ।
धुन्वन् कल्पद्रुमकिसलयान्यंशुकानीव वातै-
र्नानाचेष्टैर्जलद ललितैर्निर्विशेस्तं नगेन्द्रम् ॥ ५९ ॥

तस्योत्सङ्गे प्रणयिन इव स्रस्तगङ्गादुकूलां
न त्वं दृष्ट्वा न पुनरलकां ज्ञास्यसे कामचारिन्
या वः काले वहति सलिलोद्गारमुच्चैर्विमाना
मुक्ताजालग्रथितमलकं कामिनीवाभ्रवृंदम् ॥ ६० ॥

## ಟಿಪ್ಪಣಿ ಇತ್ಯಾದಿಗಳು

**ಮೇಘದೂತದಲ್ಲಿ ಅರ್ಥಾಂತರನ್ಯಾಸದ ಸೊಬಗು—**

ಅಲಂಕಾರಗಳು ಕಾವ್ಯದ ಕಾಂತಿಯನ್ನು ಹೆಚ್ಚಿಸುತ್ತವೆ. **काव्यशोभाकरान् धर्मान् अलङ्कारान् प्रचक्षते** ಎಂದು ಮಮ್ಮಟನ ಹೇಳಿಕೆಯುಂಟು. **सौन्दर्यं अलङ्कारः** ಎಂದು ವಾಮನ ನುಡಿಯುತ್ತಾನೆ. ಶಬ್ದಾರ್ಥಗಳು ಕಾವ್ಯಕ್ಕೆ ಶರೀರ. ಆ ಕಾರಣ ಶಬ್ದಾರ್ಥಗಳ ಸೌಂದರ್ಯ ವರ್ಧಕವಾದ ಅಲಂಕಾರಗಳು ಎರಡು ವಿಧವುಂಟು. ಶಬ್ದಾಲಂಕಾರ, ಅರ್ಥಾಲಂಕಾರ ವೆಂದು ; ಅನುಪ್ರಾಸಾದಿಗಳು ಶಬ್ದಾಲಂಕಾರಗಳು, ಉಪಮಾದಿಗಳು ಅರ್ಥಾಲಂಕಾರಗಳು ಉಪಮಾನ ಸ್ಪರ್ಶವಿಲ್ಲದ ಅಲಂಕಾರಗಳು ಅಪೂರ್ವ. ಉಪಮೆಯೊಂದೇ ಲಾಸಿಕೆಯಂತೆ ನಾನಾ ರೂಪ ತಾಳಿ ವಿಚಿತ್ರ ಭೇಧಗಳನ್ನು ಪಡೆಯುತ್ತದೆ ಎಂದು ಅಪ್ಪದೀಕ್ಷಿತರು ಚಿತ್ರ ಮೀಮಾಂಸೆಯಲ್ಲಿ ವಿವರಿಸಿದ್ದಾರೆ. ಪ್ರಕೃತ ಅರ್ಥಾಂತರನ್ಯಾಸವು ಒಂದು ಅರ್ಥಾಲಂಕಾರ. ಕವಿ ಕಾಳಿದಾಸನು ಇದನ್ನು ಎಷ್ಟು ಚೆಲುವಾಗಿ ವಿವರಿಸಿದ್ದಾನೆ ಎಂಬುದು ಇಲ್ಲಿಯ ವಿವೇಚನೆ.

**उपमा कालिदासस्य** ಎಂಬ ನುಡಿಯು ಪ್ರಸಿದ್ಧವಾದುದು. ಕವಿಯು ರಘುವಂಶದಲ್ಲಿ ಬಳಸಿದಂತೆ ಉಳಿದ ಕಾವ್ಯಗಳಲ್ಲಿ ಬಳಸಿರುವಂತೆ ತೋರುವುದಿಲ್ಲ. ಉತ್ಪ್ರೇಕ್ಷಾದಿ ಅಲಂಕಾರ ಪ್ರವಣತೆ ಉಳಿದೆಡೆಗಳಲ್ಲಿ ಕಾಣಬರುತ್ತದೆ. ಮೇಘದೂತದಲ್ಲಿ ಅರ್ಥಾಂತರನ್ಯಾಸ ಪ್ರಿಯತೆ ಹೇರಳವಾಗಿ ಗೋಚರಿಸುತ್ತದೆ.

**उक्तिरर्थान्तरन्यासः स्यात्सामान्यविशेषयोः**–ಎಂಬುದು ಅದರ ಲಕ್ಷಣ. ಸಾಮಾನ್ಯ ದಿಂದ ವಿಶೇಷವನ್ನಾಗಲೀ, ವಿಶೇಷದಿಂದ ಸಾಮಾನ್ಯವನ್ನಾಗಲೀ ಸಮರ್ಥಿಸುವುದು ಅದರ ಲಕ್ಷಣ.

ಯಕ್ಷನೊಬ್ಬ ಒಡೆಯನ ಕೋಪಕ್ಕೆ ತುತ್ತಾಗಿದ್ದಾನೆ. ಯಕ್ಷರಾಜನಿಂದ ಒಂದು ವರ್ಷ ನಿರ್ವಾಸನ ಶಿಕ್ಷೆಗೆ ಗುರಿಯಾಗಿದ್ದಾನೆ. ತೆಂಕಣದ ರಾಮಗಿರ್ಯಾಶ್ರಮದಲ್ಲಿ ವಾಸ ವಾಗಿದ್ದಾನೆ. ಅಂದು ಮೋಡವೊಂದು ಗಿರಿಶಿಖರದಲ್ಲಿ ಗೋಚರಿಸಿದೆ. ಪ್ರಿಯೆಯ ನೆನಪು ಮರುಕಳಿಸಿದೆ. ಆಗ ಮೋಡದೊಡನೆ ಪ್ರೇಯಸಿಗೆ ಸಂದೇಶ ಕಳುಹಿದ್ದಾನೆ. ಅದೊಂದನ್ನೇ ಬೇಡಲು ಕಾರಣವನ್ನು **याञ्चा मोघा वरमधिगुणे नाधमे लब्धकामा** ಎಂಬ ಅರ್ಥಾಂತರನ್ಯಾಸ ವನ್ನು ಬಳಸಿದ್ದಾನೆ.

ಮೇಘರಾಜ ! ನೀನು ಸದ್ವಂಶದಲ್ಲಿ ಜನಿಸಿದವನು ; ಪುಷ್ಕಲಾವರ್ತಕಗಳ ಕುಲವೇ ನಿನ್ನ ಕುಲ. ಇಂದ್ರನಿಗೆ ನೀನು ಅಚ್ಚುಮೆಚ್ಚು. ನೀನು ಆತನ ವಾಹನವಲ್ಲವೇ, ಜತೆಗೆ ಬೇಕಾದ ಆಕಾರವನ್ನು ಧರಿಸುವ ಯೋಗ್ಯತೆ ನಿನಗುಂಟು. ಆ ಕಾರಣ ಇಚ್ಛಾರೂಪ ಧರಿಸಿ ಯಾವ ಕೆಲಸವನ್ನಾದರೂ ಸಾಧಿಸಬಲ್ಲೆ. ದೈವಯೋಗದಿಂದ ನನಗೂ ನಿನಗೂ ನೆಂಟುಂಟು. ಆ

ಕಾರಣ ನಿನ್ನನ್ನು ಶರಣು ಹೋಗುತ್ತೇನೆ. ಕಂಡ ಕಂಡವರನ್ನು ಬೇಡುವುದಕ್ಕಿಂತ ಉತ್ತಮ ನಾದ ನಿನ್ನನ್ನು ಬೇಡುವುದು ಲೇಸು. ದುಷ್ಟರ ಸ್ನೇಹಕ್ಕಿಂತ ಮಹಾತ್ಮರೊಂದಿಗೆ ವಿರೋಧ ಒಳಿತು. ನೀಚರನ್ನು ಬೇಡಿ ಕೆಲಸ ಸಾಧಿಸುವುದಕ್ಕಿಂತ ಉತ್ತಮರನ್ನು ಬೇಡಿ ಕೆಲಸವಾಗ ದಿರುವುದೂ ಒಳಿತು. ಈ ಪದ್ಯದಲ್ಲಿ ಅರ್ಥಾಂತರನ್ಯಾಸವು ಎಷ್ಟು ಚೆಲುವಾಗಿ ಮೂಡಿದೆ. याच्ञा......ಎಂಬ ಸಾಮಾನ್ಯವನ್ನು ಮೇಘರಾಜನ ಸದ್ವಂಶಾದಿ ವರ್ಣನೆಗಳ ಮುಖಾಂತ ಕವಿ ಅನನ್ಯ ಸಾಧಾರಣವಾಗಿ ಸಾಧಿಸಿದ್ದಾನೆ.

ಮೇಘವೆಂಬುದು धूमज्योतिस्सलिलमरुतां सन्निपातः ಹೀಗಿರುವಾಗ ಮರುಳನಂತೆ ಅಚೇತ ವನ್ನು ಸಂದೇಶವಾಹಕನಾಗಿ ಕಳುಹುವುದು ಸರಿಯೇ ? ಎಂಬ ಪ್ರಶ್ನೆಯನ್ನು ಕವಿ ಅರ್ಥಾಂ ತರನ್ಯಾಸದಿಂದಲೇ ಉತ್ತರಿಸಿದ್ದಾನೆ. कामार्ता हि प्रकृति कृपणाः चेतनाचेतनेषु. ಮೇಘ ರಾಜ ಉತ್ತರಕ್ಕೆ ನಡೆ ; ಅಲ್ಲಿ ಆಮ್ರಕೂಟವೆಂಬ ಗಿರಿಯುಂಟು ಅಲ್ಲಿ ಕೆಲಕಾಲ ತಂಗು. ಅಲ್ಲಿ ನಿನಗೆ ಸಿಗುವ ಪುರಸ್ಕಾರವು ಬಣ್ಣನೆಗೆ ನಿಲುಕದ್ದು—ಇದನ್ನು ವಿವರಿಸಲು ಕವಿ प्राप्ते मित्रे भवति विमुखः किं पुनर्यस्तथोच्चैः ಎಂಬ ಅರ್ಥಾಂತರನ್ಯಾಸವನ್ನು ಬಳಸಿದ್ದಾನೆ.

ಆಮ್ರಕೂಟವೆಂಬ ಪರ್ವತವುಂಟು ; ಕಾಡುಗಿಚ್ಚಿನಿಂದ ದಗ್ಧ ಶರೀರಿಯಾದ ಅದು ನಿನ್ನ ಬರವನ್ನು ಹಾರೈಸುತ್ತಿರುತ್ತದೆ. ಅಲ್ಲಿ ಮಳೆ ಸುರಿಸಿ ಅವನ ಸಂತಾಪವನ್ನು ನೀಗಿಸು. ನಿನ್ನ ಉಪಕಾರವನ್ನು ನೆನೆದ ಅದು ನಿನಗೂ ಪ್ರತ್ಯುಪಕಾರ ಮಾಡೀತು. ತನ್ನ ಶಿಖರದಲ್ಲಿ ನಿಲ್ಲಲು ನಿನಗೆ ಎಡೆಯಿತ್ತೀತು. ಉಪಕಾರಿಗೆ ಪ್ರತ್ಯುಪಕಾರ ಮಾಡದ ಹೀನವೃತ್ತಿ ಆ ಗಿರಿಗಿಲ್ಲ.

ಮುಂದೆ ರೇವಾನದಿಯುಂಟು. ಅಲ್ಲಿ ಮಳೆ ಸುರಿಸಿ ಬರಡಾದ ನಿನ್ನ ಮೈಯನ್ನು ತುಂಬಿ ಕೊಳ್ಳುವವನಾಗು ; ರೇವಾ ನದಿಯ ಸಲಿಲವು ನಿನ್ನ ಮನೋರಥವನ್ನು ಪೂರೈಸುತ್ತದೆ. ಧನಿ ನಿಗೆ ಸಲ್ಲುವ ಗೌರವವು ಬಡವನಿಗೆ ದೊರಕದು. ನಿನ್ನ ಶರೀರವು ಜಲಶೂನ್ಯವಾಗಿ ಹಗುರ ವಾಗಿದ್ದಾಗ ಗಾಳಿಯು ನಿನ್ನನ್ನು ಹೊಡೆದುಕೊಂಡು ಹೋಗುತ್ತದೆ. ನೀರು ತುಂಬಿದ ನಿನ್ನನ್ನು ಗಾಳಿ ದೂಡದು. ಇದನ್ನು ನುಡಿಯಲು ಕವಿಯು ನೀಡಿರುವ ಅರ್ಥಾಂತರ ನ್ಯಾಸವು ಮನನೀಯವಾದುದು: रिक्तस्सर्वो भवति हि लघुः पूर्णता गौरवाय ।

ಅಯ್ಯಾ ಜೀಮೂತವೇ, ಅಲ್ಲಿಂದ ಮುಂದೆ ನಡೆ. ದಾರಿ ಬಳಸಾದರೂ ಚಿಂತೆಯಿಲ್ಲ. ಉಜ್ಜಯಿನಿಯನ್ನು ನೋಡಲು ಮರೆಯದಿರು. ಅಲ್ಲಿಯ ಪೌರಪುರಂಧ್ರಿಯರ ಚಕಿತ ಹರಿಣ ಕಟಾಕ್ಷಕ್ಕೆ ಪಾತ್ರನಾಗದಿದ್ದರೆ ನಿನ್ನ ಜೀವನವು ವ್ಯರ್ಥವಾಗುತ್ತದೆ. ಅಲ್ಲಿ ನಿರ್ವಿಂಧ್ಯಾ ಎಂಬ ನದಿಯುಂಟು ; ಆಕೆಯ ಅವಯವ ಸಂಪರ್ಕವನ್ನು ಪಡೆದು ಸುಖಿಯಾಗು. ಇದನ್ನು ವಿವರಿಸಲು ಕವಿ ನೀಡಿರುವ ಅರ್ಥಾಂತರನ್ಯಾಸದ ಸೊಬಗನ್ನು ಅನುಭವಿಸಿ

"स्त्रीणामाद्यं प्रणयवचनं विभ्रमो हि प्रियेषु"

ಅಚೇತನದಲ್ಲಿ ಚೇತನ ವ್ಯವಹಾರಾರೋಪದಿಂದ ಜನಿಸುವ ರಸೋತ್ಕರ್ಷವು ಅನುಭವವೇದ್ಯವಾದುದು. ನಿರ್ವಿಂಧ್ಯಾ ಶೃಂಗಾರದ ತನಿರಸವನ್ನು ಧಾರೆಯೆರೆಯುತ್ತಾಳೆ. ಆ ತಟಿನಿಗೆ ಜಲಚರ ಪಕ್ಷಿಗಳ ನಿನಾದವೇ ಕಿಂಕಿಣಿಯ ನಾದ. ಲಜ್ಜೆಯಿಂದ ಮೆಲ್ಲಮೆಲ್ಲನೆ ಧುಮುಕುವುದೇ ಪದಸ್ಖಲನ. ನಿಮ್ನಾವರ್ತನವೇ ಆವರ್ತನಾಭಿ. ಸಲಿಲವೇ ಶೃಂಗಾರ ರಸ. ಅಯ್ಯಾ, ಮೋಡವೇ ಸ್ತ್ರೀಯರು ತಮ್ಮ ಮನೋಗತವನ್ನು ಬಾಯಿಬಿಟ್ಟು ಹೇಳುವುದಿಲ್ಲ. ಅವರ ವಿಲಾಸ ವಿಭ್ರಮಗಳಿಂದಲೇ ಅದನ್ನು ಅರಿಯಬೇಕು. ಈ ನುಡಿ ಕಾಳಿದಾಸನ ವಾಗ್ವಿಲಾಸಕ್ಕೂ ಸಮವೇ.

1 रामगिरेः आश्रमाः + तेषु = रामगिर्याश्रमेषु

स्वस्य + अधिकारः + तस्मात् = स्वाधिकारात् स्वाधिकारात् प्रमत्तः ವ್ಯಾ.ವಿ.

"जुगुप्सा विराम प्रमादार्थानां उपसंख्यानम्" ಎಂಬ ವಾರ್ತಿಕದಿಂದ ಪಂಚಮಿ.

कान्तायाः विरहः तेन गुरुः तेन = कान्ताविरहगुरुणा ।

वर्षं भोग्यः + तेन = वर्षभोग्येण

अस्तं गमितः महिमा यस्य सः = अस्तंगमितमहिमा

जनकस्य तनया तस्याः स्नानानि तैः पुण्यानि उदकानि येषु तेषु=जनकतनया-स्नानपुण्योदकेषु ।

छायाप्रधानाः तरवः तेषु = छायातरुषु—ಮಧ್ಯಮ ಪದಲೋಪಿ ಸಮಾಸ.

2 कनकस्य वलयः तस्य भ्रंशः तेन रिक्तः प्रकोष्ठः यस्य सः = कनकवलयभ्रंश-रिक्तप्रकोष्ठ; आषाढानक्षत्रेण युक्ता—'नक्षत्रेण युक्तः कालः ಎಂಬುದರಿಂದ अण् ಪ್ರತ್ಯಯ ಬಂದಿದೆ.

आश्लिष्टाः सानवः येन तम् = आश्लिष्टसानुम्

वप्रक्रीडायां परिणतः गजः तद्वत् प्रेक्षणीयम् = वप्रक्रीडापरिणतगजप्रेक्षणीयम्

3 राज्ञां राजा = राजराजः तस्य = राजराजस्य—ಕುಬೇರನ राजा—ಯಕ್ಷ.

"राजा प्रभौ नृपे चन्द्र यक्षे क्षत्रिय शक्रयोः–ವಿಶ್ವಕೋಶ.

| | | |
|---|---|---|
| दध्यौ | दध्यतुः | दध्युः |
| दध्यिथ / दध्याथ | दध्यथुः | दध्य |
| दध्यौ | दध्यिव | दध्यिम |

√ ध्यै, लिट् ।

अन्यथा वृत्तिः यस्य तत् = अन्यथावृत्ति

कण्ठस्य आश्लेषः तस्मिन् प्रणयः अस्य अस्तीति तस्मिन् = कण्ठश्लेषप्रणयिनि

दूरे संस्था यस्य तस्मिन् =दूरसंस्थे

4 नभसि—ಶ್ರಾವಣ ಮಾಸವು        सति सप्तमी

"नभः खं श्रावणे नभाः—ಅಮರ

दयितायाः जीवितस्य आलम्बनं अर्थयत इति = दयिताजीवितालम्बनार्थी

स्वस्य कुशलं तेन व्याप्तां = स्वकुशलमयीम् ।

प्रवृत्तिः—ಸಮಾಚಾರ

"वार्ताप्रवृत्तिः वृत्तान्तः—ಅಮರ        प्रत्यग्रम्—ನೂತನ

प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः ಅಮರ.

कल्पितः अर्घः यस्य तस्मै = कल्पितार्घाय

प्रीतिप्रमुखाणि वचनानि यस्मिन् कर्मणि तद्यथा भवति तथा = प्रीतिप्रमुख-वचनम् ।        शोभनं + आगतम् = स्वागतम् ।

5 धूमः च ज्योतिः च सलिलं च मरुत् च तेषाम् = धूमज्योतिस्सलिलमरुताम् ।

सन्दिश्यन्त इति सन्देशाः त एव अर्थाः = सन्देशार्थाः

प्रकृत्या कृपणाः = प्रकृतिकृपणाः        प्रकृतिः—ಸ್ವಭಾವ.

ಈ ಪದ್ಯದಲ್ಲಿ ವಿಷಮಾಲಂಕಾರವಿದೆ.

विषमं वर्ण्यते यत्र घटनाननुरूपयोः ।

केयं शिरीषमृद्वङ्गी क्व तावन्मदनज्वरः ॥

6 भुवनेषु विदितः तस्मिन् = भुवनविदिते
कामेन रूपाणि यस्य तं = कामरूपम्
दूरे बन्धुः यस्य सः = दूरबन्धुः ಅರ್ಥಾಂತರನ್ಯಾಸಾಲಂಕಾರ
उक्तिरर्थान्तरन्यासः स्यात्सामान्यविशेषयोः
हनूमानब्धिमतरत् दुष्करं किं महात्मनाम् ।

7 धनपतेः क्रोधः तेन विश्लेषितः तस्य धनपतिक्रोधविश्लेषितस्य ।
ते गन्तव्या–कृत्यानां कर्तरि वा ಎಂಬುದರಿಂದ चतुर्थी
बाह्योद्याने स्थितस्य हरस्य शिरः तस्मिन् 'चन्द्रिका तथा धौतानि हर्म्याणि
यस्यां सा = बाह्योद्यानस्थित हरशिरश्चन्द्रिकाधौतहर्म्या ।

8 पन्थानं गच्छन्तीति पथिकाः तेषां वनिताः = पथिकवनिताः ।
पथिकः—"पथः ष्कन्" ಎಂಬುದರಿಂದ ष्कन् ಪ್ರತ್ಯಯ
पराधीना वृत्तिः यस्य सः = पराधीनवृत्तिः

9 मन्दं मन्दं–'नित्यं वीप्सयोः ಎಂಬುದರಿಂದ द्विर्भाव
आबद्धाः मालाः याभिः ताः = आबद्धमालाः ।

10 एकः पतिः यस्याः तां = एकपत्नीम्
अविहता गतिः यस्य सः = अविहतगतिः
प्रणयः अस्य अस्तीति = प्रणयि
सद्यः पतितुं शीलं अस्य इति = सद्यःपाति

11 उद्गताः शिलीन्ध्राः यस्याः तां = उच्छिलीन्ध्राम् शिलीन्ध्रः—ನಾಯಿಕೊಡೆ.
मानसे उत्काः = मानसोत्काः पाथेयम् ಬುತ್ತಿ पथि साधु = पाथेयम्
"पथ्यतिथिवसति स्वपतेर्ढञ् ಎಂಬುದರಿಂದ ढञ् ಪ್ರತ್ಯಯ ಬಂದಿದೆ

बिसानां किसलयानि तेषां छेदाः एव पाथेयां एषां अस्तीति = बिसकिसलय-च्छेदपाथेयवन्तः ।
आकैलासात् ವ್ಯಾವಿ. पञ्चम्यपाङ्परिभिः, आङ् मर्यादावचने " ಎಂಬುದರಿಂದ पञ्चमी ।

12 आपृच्छस्व ವ್ಯಾವಿ पृच्छ ಧಾತುವು ಪರಸ್ಮೈ ಪದ ಆದರೆ ಇಲ್ಲಿ "आङि नृपृच्छयो-रुपसंख्यानम् " ಎಂಬ ವಾರ್ತಿಕದಿಂದ आत्मने ಪದವ್ಪ.
चिरं विरहः तस्मात् जातः तं = चिरविरहजम्
बाष्पः—ಕಣ್ಣೀರು.
बाष्पो नेत्रजलोष्मणोः ವಿಶ್ವಕೋಶ.

13 पातुं योग्यः = पेयः. श्रोत्राभ्यां पेयः तं = श्रोत्रपेयम् स्रोतः—ನದಿ.
'उपलास्फालनाक्षेपविच्छेदैः स्वेदितोदकाः ।
हिमवन्मलयोद्भूताः पथ्या नद्यो भवन्त्यमः ॥
ಎಂಬ ವಾಗ್ಭಟ ವಚನದಿಂದ ಆರೋಗ್ಯಕರ.

14 उद्गतानि मुखानि यासां ताभिः = उन्मुखीभिः
"स्वाङ्गाच्चोपसर्जनात् असंयोगोपधात् " ಎಂಬುದರಿಂದ ङीष् ।
ದಿಙ್ನಾಗಗಳು— ऐरावतः पुष्पदन्तः, पुण्डरीकः, वामनः, कुमुदः, अञ्जनः सार्वभौमः, सुप्रतीकः ।
दिङ्नागानां पथि + परिहरन्—ವಿಶೇಷ ವಿಷಯ :—
ಮಲ್ಲಿನಾಥನು ಈ ಪದ್ಯದಲ್ಲಿ ಧ್ವನಿಯನ್ನು ಗುರುತಿಸಿದ್ದಾನೆ. ನಿಚುಲನೆಂಬ ಕವಿ ಕಾಳಿದಾಸನ ಸಹಾಧ್ಯಾಯಿಯಾಗಿದ್ದ. ದಿಙ್ನಾಗನೆಂಬ ಮತ್ತೊಬ್ಬ ಕಾಳಿದಾಸನ ಕಾವ್ಯಗಳನ್ನು ಮನಸ್ಸಿಗೆ ಟೀಕಿಸುತ್ತಿದ್ದ. ಅದನ್ನು ಸಹಿಸದ ನಿಚುಲ ಅದನ್ನು ಖಂಡಿಸುತ್ತಿದ್ದ, ಎಂದು. सरसः निचुलः यस्मिन् तस्मात् स्थानात् ರಸಿಕನಾದ ನಿಚುಲ ಇರುವೆಡೆಯಿಂದ, दिङ्नागानां = ದಿಙ್ನಾಗನಂಥವರ स्थूलाः ये हस्तावलेपाः

ಕಾಳಿದಾಸನ ಮೇಲೆ ಮಾಡಿದ ಆರೋಪಗಳು. **परिहरन्**–ನಿವಾರಿಸುತ್ತಾ, **उदङ्मुखः** ತಲೆಯೆತ್ತಿದವನಾಗಿ ಎಂದು ವ್ಯಾಖ್ಯಾನಮಾಡಬೇಕು.

15 **वल्मीकाग्रात् प्रभवति धनुःखण्डमाखण्डलस्य**—ಹುತ್ತದ ಬಳಿಯಿಂದ ಕಾಮನ ಬಿಲ್ಲು ಉದಿಸುತ್ತದೆಂಬುದು ಕವಿ ಸಮಯ.

ಜಯದೇವನ ಈ ಪದ್ಯವನ್ನು ಗಮನಿಸಿ—

**चन्द्रकचारुमयूरशिखण्डक मण्डलवलयितवेषम् ।**
**प्रचुर पुरन्दर धनुरनुरञ्जित मेदुरमुररिपुवेषम् ॥**

16 **आयत्तम्**—ಅಧೀನವಾದುದು

जनानां पदम् जनपदः तस्य वध्वः तासां लोचनानि तैः = जनपदवधूलोचनैः ।

17 आसारेण प्रशमितः वनोपप्लवः येन तम् = आसारप्रशमित वनोपप्लवम् ।

आसारः—ಮಳೆ. धारासम्पात आसारः—ಅಮರ

अध्वनः श्रमः तं परिगतः तम् = अध्वश्रमपरिगतम्

क्षुद्रः—ಕೀಳು ಮನುಷ್ಯ उच्चैः—ಅವ್ಯಯ

ಹೋಲಿಸಿ—क्षुद्रेऽपि नूनं शरणं प्रपन्ने
ममत्वमुच्चैः शिरसामितीव ॥ ಕುಮಾರಸಂಭವ.

18 वने चरन्तीति = वनचराः—"तत्पुरुषे कृति बहुलम्" ಎಂಬುದರಿಂದ अलुक् ಸಮಾಸ ವಿಕಲ್ಪ.

वने चराणां वधूभिः भुक्ताः कुञ्जाः यस्मिन् तस्मिन्=वनचरवधूभुक्तकुञ्जे ।

कुञ्जः—ಪೊದರು.

"निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे ಅಮರ

पादः—ಪ್ರತ್ಯಂತ ಪರ್ವತ, ತಪ್ಪಲು.

भक्तिच्छेदाः—ಅಲಂಕಾರ ಪ್ರಕಾರಗಳು रेवा—ನರ್ಮದಾ ನದಿ.

"रेवा तु नर्मदा सोमोद्भवा मेखलकन्यका ಅಮರ

19 वान्ताः वृष्टयः येन सः = वान्तवृष्टिः

तिक्तः—ಸುವಾಸಿತವಾದ तिक्तो रसे सुगन्धे च ವಿಶ್ವಕೋಶ.

जम्बूनां कुञ्जाः तैः प्रतिहतः रथः यस्य तत् = जम्बूकुञ्जप्रतिहतरथम्

अन्तः सारः यस्य तं = अन्तस्सारम् ।

ವಾತರೋಗದಿಂದ ಪೀಡಿತನಾದವನಿಗೆ ಮೊದಲು ವಮನಕ್ಕೆ ಔಷಧಿ ನೀಡಬೇಕು ಎಂದು ವಾಗ್ಭಟನ ಅಷ್ಟಾಂಗ ಹೃದಯದಲ್ಲಿ ಹೇಳಿಕೆಯುಂಟು. ಹೋಲಿಸಿ ನೋ

गुणयुक्तोऽप्यधो याति रिक्तः कूपे यथा घटः ।
गुणहीनोऽपि सम्पूर्णो जनैः शिरसि धार्यते ॥

20 अर्ध + रूढाः तैः = अर्धरूढैः

नीपं—ಕದಂಬ ವೃಕ್ಷವನ್ನು कच्छेषु = अनुकच्छम् ಅವ್ಯಯೀಭಾವ ಸಮಾ

आविर्भूताः प्रथमाः मुकुलाः यासां ताः = आविर्भूतप्रथममुकुलाः

जग्ध्वा—ಸವಿ ನೋಡಿ.

जललवान् मुञ्चतीति तस्य जललवमुचः

ಈ ಪದ್ಯದಲ್ಲಿ ಕವಿಯು ನಾಯಕನಿಗೆ ಇರುವ ನಾಯಕಿಯ ಅಧರಪಾನಾಸಕ್ತಿಯ ತೋರಿಸುತ್ತಾನೆ.

ಹೋಲಿಸಿ—तदाननं मृत्सुरभि क्षितीशः
रहस्युपाघ्राय न तृप्तिमाययौ ॥ ರಘುವಂಶ

सारङ्गाः ಎಂಬ ಪದಕ್ಕೆ ಜಿಂಕೆಗಳು, ಆನೆಗಳು ಎಂಬ ಎರಡರ್ಥವನ್ನು ಹೇಳಬಹು

21 यातुं + इच्छुः + तस्य = यियासोः

ककुभः—ಒಂದು ಜಾತಿಯ ಮಲ್ಲಿಗೆ. "ककुभः कुटजेऽर्जुने" ಶಬ್ದಾರ್ಣವ.

शुक्लापाङ्गैः—ನವಿಲುಗಳಿಂದ

"मयूरो बर्हिणो बर्ही शुक्लापाङ्गः शिखावलः ಎಂದು ಯಾದವ ಕೋಶ.

न स्वागतं स्वागतं सम्पद्यमानं कृत्वा = स्वागतीकृत्य ।

22 दश ऋणानि येषु ते = दशार्णाः ।

" प्रवत्सतरकम्बलवसनदशार्णानामृणे ಎಂಬ ವಾರ್ತಿಕದಿಂದ ವೃದ್ಧಿ.

दशार्ण ಎಂಬುದು ದೇಶವಾಚಿ ಮತ್ತು ನದೀವಾಚಿ.

ಕೌಮುದಿಯನ್ನು ನೋಡಿ—

दशार्णः देशः नदी च दशार्णा । ऋणशब्दः दुर्गभूमौ जले च, दशार्णाः सम्पत्स्यन्ते पाण्डुः छाया यासां ताः, उपवनानां वृतयः, पाण्डुच्छायाः उपवनवृतय येषु ते = पाण्डुच्छायोपवनवृतयः ।

बलिभुक्—ಕಾಗೆ

कतिपयेष्वेव दिनेषु स्थायिनः हंसाः येषु ते = कतिपयदिनस्थायिहंसाः ।

23 प्रथितं विदिशेति लक्षणं यस्याः तां = प्रथितविदिशालक्षणाम् ।

ಇಲ್ಲಿ ಲಕ್ಷಣ ಶಬ್ದಕ್ಕೆ ಹೆಸರು ಎಂದು ಮಾತ್ರ ಅರ್ಥ.

"लक्षणं नाम्नि चिह्ने च" ವಿಶ್ವಕೋಶ.

सद्यः—ಒಡನೆ                लब्धा = लृट् लकारः

चलाः ऊर्मयः यस्मिन् तत् = चलोर्मि

तीरस्य उपान्तः, तस्मिन् स्तनितं तेन सुभगं यथा तथा = तीरोपान्तस्तनितसुभगम् ।

24 नीचैः इति आख्या यस्य तं = नीचैराख्यम्

आख्यम्—ಪ್ರಸಿದ್ಧವಾದ

गिरिं अधिवसेः – "उपान्वध्याङ्वसः" ಎಂಬುದರಿಂದ ದ್ವಿತೀಯೆ.

विश्रामहेतोः ಎಂಬಲ್ಲಿ विश्राम ಶಬ್ದವು अपाणिनीय "विश्रामो वा" ಎಂಬ ಚಾಂದ್ರ ವ್ಯಾಕರಣದಿಂದ ರೂಪಸಿದ್ಧಿ "विश्रामो हृदयस्य यत्र" ಎಂದು भवभूति ಪ್ರಯೋಗ.

पण्यस्त्री—ವಾರಾಂಗನೆ, ಗಣಿಕೆ.          शिलावेश्म—ಗುಹೆ

नगरे + भवाः + तेषां = नागराणाम् ।

25 वनस्य नद्यः तासां तीरेषु जातानि = वननदीतीरजातानि

यूथिका—ಮಲ್ಲಿಗೆಯ ಒಂದು ಜಾತಿ.

गण्डयोः स्वेदः तस्य अपनयनेन रुजा. तया क्लान्तानि कर्णेषु उत्पलानि यासां तासां = गण्डस्वेदापनयनरुजाक्लान्तकर्णोत्पलानाम्

रुजा; "षिद्भिदादिभ्योऽङ्" ಎಂಬುದರಿಂದ अङ् ಪ್ರತ್ಯಯ; ಹೀಗೆಯೇ भिदा छिदा ಮುಂತಾಗಿ

पुष्पाणि लुनन्तीति पुष्पलाव्यः तासां मुखानाम् = पुष्पलावीमुखानाम् ।

26 ಉಜ್ಜಯಿನಿಯು ನಿರ್ವಿಂಧ್ಯಾ ನದಿಯ ಪೂರ್ವಕ್ಕುಂಟು. ಆ ಕಾರಣ ಉತ್ತರಕ್ಕೆ ಹೋಗುವ ಮೇಘಕ್ಕೆ ದಾರಿಯು ಬಳಸೆಂಬುದು ಕವಿಯ ಅಭಿಪ್ರಾಯ.

आशा—ದಿಕ್ಕು

सौधानां उत्सङ्गः, तेषु प्रणयः तस्मिन् विमुखः = सौधोत्सङ्गप्रणयविमुखः।

ಉಜ್ಜಯನಿ ಭಾರತದ ಏಳು ಮಹಾ ಕ್ಷೇತ್ರಗಳಲ್ಲೊಂದು.

अयोध्या मथुरा माया काशी काञ्ची ह्यवन्तिका पुरी द्वारावती चैव सप्तैता मोक्षदायकाः ।

ಇದು ವಿಕ್ರಮನ ರಾಜಧಾನಿಯಾಗಿತ್ತು. ಸಿಪ್ರಾನದಿಯ ದಡದಲ್ಲಿದೆ ಈ ನಗರ. ಇದೇ ಕವಿಯ ಜನ್ಮಸ್ಥಳವಿರಬಹುದೆಂದು ವಿದ್ವಾಂಸರ ಅಭಿಪ್ರಾಯ.

मा स्म भूः—"न माङ् योगे" ಅಡಾಗಮ ನಿಷೇಧ.

27 वीचीनां क्षोभः तेन स्तनिता विहगानां श्रेणिः, सैव काञ्चीगुणः यस्याः तस्याः श्रेणीभूतस्तानितविहगश्रेणिकाञ्चीगुणायाः ।

दर्शिताः आवर्तः एव नाभिः यस्याः तस्याः = दर्शितावर्तनाभेः ।

निष्क्रान्ता विन्ध्यायाः = निर्विन्ध्या ಪ್ರಾದಿ ಸಮಾಸ.

28 अवेणी वेणी सम्पद्यमानं भूतम् = वेणीभूतम् प्रतनु च सलिलं यस्याः सा वेणीभूतप्रतनुसलिला । सुभगस्य भावः = सौभाग्यम् ।

" ह्रद्भगसिन्ध्वन्ते पूर्वपदस्य च ಎಂಬುದರಿಂದ ಉಭಯ ವೃದ್ಧಿ.

कार्श्य ವೆಂಬುದು ವಿರಹಾವಸ್ಥೆಯಲ್ಲಿ 5ನೆಯದು

" नयनप्रीतिः प्रथमं चित्तासङ्गस्तथोऽथ सङ्कल्पः ।
निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः ।
उन्मदो मूर्छा मृतिरित्येता स्मरदशाः दशैव स्युः ॥ ರತಿರಹಸ್ಯ.

ಈ ಪದ್ಯದಲ್ಲಿ असावतीतस्य सिन्धुः ಎಂಬಲ್ಲಿರುವ सिन्धु ಪದವು ನಿರ್ವಿಂಧ್ಯಾ ನದಿಗೆ ಅನ್ವಯವಾಗ ತಕ್ಕದ್ದು. ಏಕೆಂದರೆ ಸಿಂಧುವು ನದವೇ ಪರಂತು ನದಿಯಲ್ಲ. ಪಶ್ಚಿಮ ದಿಂದ ಪೂರ್ವಕ್ಕೆ ಹರಿಯುವ ಹೊಳೆಗಳು ನದಿಗಳು, ಪೂರ್ವದಿಂದ ಪಶ್ಚಿಮಕ್ಕೆ ಹರಿ ಯುವುವು ನದಗಳು. ಕಾಶ್ಮೀರದಲ್ಲಿ ಹರಿಯುವುದು ಸಿಂಧೂ ನದ, ನದಿಯಲ್ಲ.

29 अवन्ती = ವಿಂಧ್ಯದ ಉತ್ತರಕ್ಕಿರುವ ದೇಶ.

उदयनस्य कथायां कोविदाः ग्रामवृद्धाः येषु तान्=उदयनकथाकोविद ग्रामवृद्धान्।

ಉದಯನನು ಚಂದ್ರವಂಶದ ಅರಸು. ಆಂಪತಿಯು ಅವನ ಮಾವನರಾಜ್ಯ. ಕೌಶಾಂಬಿಯು ಅವನರಾಜಧಾನಿ. ವತ್ಸರಾಜನೆಂಬುದು ಅವನ ಮತ್ತೊಂದು ಹೆಸರು. ಇವನ ಚರಿತ್ರೆಯು ಬೃಹತ್ಕಥೆ, ಕ್ಷೇಮೇಂದ್ರನ ಬೃಹತ್ಕಥಾಮಂಜರಿ, ಸೋಮದೇವನ ಕಥಾ ಸರಿತ್ ಸಾಗರದಲ್ಲಿ ಉಪವರ್ಣಿತವಾಗಿವೆ. ಭಾಸನ ಪ್ರತಿಜ್ಞಾ ಯೌಗಂಧರಾಯಣ, ಸ್ವಪ್ನ ವಾಸವದತ್ತೆಗಳಲ್ಲಿ ಈತನ ಚರಿತ್ರೆಯನ್ನು ಕಾಣಬಹುದು.

विशाला = ಉಜ್ಜನಿಯ ಮತ್ತೊಂದು ಹೆಸರು.

कान्तिमत् एकं खण्डमिव—ಸ್ವರ್ಗದ ತುಣುಕೇ ಸಕಲ ವೈಭವದೊಡನೆ ಇಳಿದು ಬಂದಿದೆಯೋ ಎಂಬಂತೆ.

30 अदीर्घं दीर्घं सम्पद्यमानं कुर्वन् = दीर्घीकुर्वन् ।

मदकलम्—ಮದ್ಯಪಾನದಿಂದ ಮಧುರವಾದ. प्रत्यूष—ಬೆಳಗಿನ ಜಾವ.

प्रार्थनायां चाटु करोतीति = प्रार्थनाचाटुकारः ।

32 केशसंस्कारधूपैः उपचितवपु = ಮೋಡವು धूमज्योतिस्सलिलमरुतां सन्निपातः ಎಂಬುದನ್ನು ಗಮನಿಸಿ. ಈಗ ಕೇಶಸಂಸ್ಕಾರಧೂಪದಿಂದ ಮೋಡದ ಶರೀರ ಬೆಳೆ ಯುತ್ತದೆ ಎಂಬುದರ ಔಚಿತ್ಯವನ್ನು ಪರಿಶೀಲಿಸಿ.

शिखी—ನವಿಲು ' शिखावलः शिखी केकी " ಅಮರ

33 भर्तुः कण्ठच्छविरिति — ಹಿಂದೆ ದೇವತೆಗಳೂ ಅಸುರರೂ ಅಮೃತಕ್ಕಾಗಿ ಕ್ಷೀರ ಸಮುದ್ರವನ್ನು ಕಡೆದರು. ಆಗ ಮೊದಲು ಕಾಲಕೂಟವುದಿಸಿತು. ಅದನ್ನು ಪರ ಶಿವನು ಲೋಕಕಲ್ಯಾಣಕ್ಕೆ ತಾನೇ ಪಾನಮಾಡಿದ. ಅದು ಅವನ ಕತ್ತಿನಲ್ಲಿ ಉಳಿಯಿತು. ಅಂದಿನಿಂದ ಪರಶಿವನು ಕರಿಗೊರಳನಾದ ಎಂಬ ಕಥೆಯು ಪ್ರಸಿ ದಲ್ಲಿದೆ.

त्रयाणां भुवनानां समाहारः त्रिभुवनम् ಸಮಾಹಾರ ದ್ವಂದ್ವ.

"तद्धितार्थो पपद समाहारे च" ಅನುಶಾಸನ

धूतं + उद्यानं यस्य तत् = धूतोद्यानम् ।

कुवलयानां रजांसि तेषां गन्धः एषु अस्तीति तैः = कुवलयरजोगन्धिभिः ।

34 ते स्यातव्यम्— 'कृत्यानां कर्तरि वा" ಎಂಬುದರಿಂದ ಶರಣಾರ್ಥದಲ್ಲಿ ಚತುರ್ಥೀ.

सन्ध्यायां बलिः, तस्मिन् पटहः, तस्य भावः, तां = सन्ध्याबलिपटहताम् ।

35 रशना—ಮೇಖಲೆ, ಉಡ್ಯಾಣ.

रत्नानां छायाभिः खचिताः वलयाः येषां तैः = रत्नच्छायाखचितवलिभिः ।

वलिः—ಚಾಮರದ ಹಿಡಿ. "वलिश्चामरदण्डे च" ವಿಶ್ವಕೋಶ.

36 नृत्तस्य आरम्भः तस्मिन् = नृत्तारम्भे

ನೃತ್ಯವು ಭಾವಾಭಿನಯ; ಸಂಗೀತ ತಾಳಗಳೊಡನೆ ಅಭಿನಯಿಸುವುದು ನೃತ್ತ ವೆನಿಸು ತ್ತದೆ. भावाश्रयं तु नृत्यं स्यात् नृत्तं ताललयान्वितम्" ದಶರೂಪಕ.

भुजतरुवनं अभिलीनः ವ್ಯಾಪಿ.

"लक्षणेनाभिप्रती अभिमुख्ये" ಎಂಬ ಸೂತ್ರದಿಂದ ಸಪ್ತಮ್ಯರ್ಥದಲ್ಲಿ ದ್ವಿತೀಯಾ ವಿಭಕ್ತಿ ಬಂದಿದೆ.

प्रतिनावानि जपापुष्पाणि तद्वत् रक्तं = प्रतिनवजपापुष्परक्तं ।

भवस्य पत्नी = भवानी.

"इन्द्र वरुण भव शर्व रुद्र मृड हिमारण्य यव यवन मातुलाचार्याणामानुक्" ಎಂಬುದರಿಂದ आनुगागम ಬಂದಿದೆ.

दृष्टं भक्तिः यस्य सः = दृष्टभक्तिः ಎಂಬುದು ವಿಗ್ರಹವಾಕ್ಯ.

दृष्टा भक्तिः यस्य सः ಎಂಬುದು ಅಸಾಧುವಾದುದು. ಆಗ ಪುಂವದ್ಭಾವ ಬರುವುದು ಅಸಾಧ್ಯವಾಗುತ್ತದೆ.

आर्द्रं यत् नागाजिनं तस्मिन् इच्छा, तां, आर्द्रनागाजिनेच्छाम् ।

37 नक्तं = ಅವ್ಯಯ, ರಾತ್ರಿಯಲ್ಲಿ

सूचिभिः भेत्तुं योग्यैः = सूचिभेद्यैः

नरपतेः पन्थाः तस्मिन् = नरपतिपथे ।

" ऋक्पूरब्धूः पथामानक्षे ಎಂಬುದರಿಂದ अप्रत्यय ಬಂದಿದೆ.

सौदामिनी—ಮಿಂಚು

तोयोत्सर्गश्च स्तनितं च ताभ्यां मुखरः = तोयोत्सर्गस्तनितमुखरः ।

38 वलभी—ಸೂರು.

" आच्छादनं स्याद्वलभी गृहाणाम—ಹಲಾಯುಧ, ಕೋಶ.

खिन्नं विद्युदेव कलत्रं यस्य सः = खिन्नविद्युत्कलत्रः ।

39 खण्डिता—ಪತಿಯು ಅನ್ಯಾಸಕ್ತನಾದುದರಿಂದ ಕುಪಿತಳಾದ ನಾಯಿಕೆ.

40 विशदम्—ಬಿಳುಪಾದ

चटुलानि शफराणां उद्वर्तनानीव प्रेक्षितानि = चटुलशफरोद्वर्तनप्रेक्षितानि ।

शफर —ಒಂದು ಬಗೆಯ ಮೀನು. गम्भीरा—ಒಂದು ನದಿಯ ಹೆಸರು.

41 तव निष्यन्दः तेन उच्छूसिता वसुधा तस्याः गन्धः तस्य सम्पर्कः तेन रम्यः = त्वन्निष्यन्दोच्छ्वसितवसुधागन्धसम्पर्करम्यः ।

उदुम्बराः—ಅತ್ತಿಯ ಮರ. नीचैः—ಮೆಲುವಾಗಿ

42 पुष्पासारैः—ಕುಸುಮ ವೃಷ್ಟಿಗಳಿಂದ

पुष्पाणां मेघः, अतघपुभूतः पुष्पमेघः सम्पद्यमाघः कृतः आत्मा यस्य सः = पुष्पमेघीकृतात्मा ।
आदित्यं अतिक्रान्तं = अत्यादित्यम् ।
"अत्यादयः क्रान्ताद्यर्थे द्वितीयया ಎಂಬುದರಿಂದ ಪ್ರಾದಿ ಸಮಾಸ.

44 शराणां + वनं = शरवणम् ।
शरवणे भवः यस्य तम् = शरवणभवम् ವ್ಯಧಿಕರಣ ಬಹುವ್ರೀಹಿ.
वीणाः येषां सन्तीति = वीणीनि, तैः = वीणिभिः
जलकणेभ्यः भयं तस्मात् = जलकणभयात् ।
उल्लंघितः अध्वा येन सः = उल्लंघिताध्वा ।
भुवि परिणतां रन्तिदेवस्य कीर्तिम् —
ರಂತಿದೇವನು ದಶಪುರದ ಅರಸು. ಆತ ಒಮ್ಮೆ ಗವಾಲಂಭನವೆಂಬ ಯಾಗವನ್ನು ಮಾಡಿದ. ಸತ್ತ ಪಶುಗಳ ಚರ್ಮವನ್ನು ಹರಡಿದ. ಅದರಿಂದ ಹರಿದ ನೆತ್ತರು ಹೊಳೆಯಾಗಿ ಹರಿಯಿತು. ಅದೇ ಚರ್ಮಣ್ವತಿ ಎಂಬುದು ಪೂರ್ವ ಕಥೆ.

45 शृङ्गस्य विकारः = शार्ङ्गम्, शार्ङ्ग अस्य अस्तीति तस्य शार्ङ्गिणः, ವಿಷ್ಣುವಿನ ಬಿಲ್ಲಿಗೆ ಶಾರ್ಙ್ಗವೆಂದು ಹೆಸರು; दूरभावात् तनुं ದೂರಗತನಾದುರಿಂದ ಚಿಕ್ಕದಾಗಿ ತೋರುವ; स्थूलः मध्यः इन्द्रनीलः यस्य तम् = स्थूलमध्येन्द्रनीलम् । ಈ ಪದ್ಯದಲ್ಲಿ ಮಲ್ಲಿನಾಥನ ಅಭಿಮತದಂತೆ ಉತ್ಪ್ರೇಕ್ಷಾಲಂಕಾರವಿದೆ.

45 ದಶಪುರ—ರಂತಿದೇವನ ರಾಜಧಾನಿಯ ಹೆಸರು. ಇದು ಈಗಿನ ರಂತಿಪುರವೆಂದು ವಿಲ್ಸನ್ ಅವರ ಅಭಿಪ್ರಾಯ. ಇದು ಸ್ಥಾಣೇಶ್ವರದಿಂದ ಉಜ್ಜಯಿನಿಗೆ ಹೋಗುವ ದಾರಿಯಲ್ಲಿದೆ. ಆ ಗ್ರಾಮವು ಚಂಬಲ್ ಕಣಿವೆಯ ಉತ್ತರಕ್ಕುಂಟು. ಆಪ್ಟೆಯವರು ಈಗಿನ ಧೋಲಾಪುರವೇ ದಶಪುರವೆನ್ನುತ್ತಾರೆ.
आत्मनः बिम्बं = आत्मबिम्बम् ಸ್ವರೂಪವನ್ನೇ
दशपुरस्य वध्वः तासां नेत्रकौतूहलानि = दशपुरवधूनेत्रकौतूहलानि ।
भ्रुवः लताः इव = भ्रूलताः

" उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" ಎಂಬುದರಿಂದ ಉಪಮಿತ ಸಮಾಸ.

पक्ष्मोत्क्षेपः—ಹುಬ್ಬು ಮೇಲೆತ್ತುವಿಕೆ.

कृष्णाश्च शाराश्च, उपरिविलसन्तः कृष्णशाराः प्रभाः येषां ते तेषां = उपरिविलसत्कृष्णशारप्रभालाम् ।

कुन्दानां क्षेपाः ताम् अनुगच्छन्तीति तथाभूताः मधुकराः, तेषां श्रियं मुष्णन्तीति तेषां = कुन्दक्षेपानुगमधुकरश्रीमुषाम् ।

ಮೇಲೆಸೆದ ಮೊಲ್ಲೆಯನ್ನು ಅನುಸರಿಸಿದ ದುಂಬಿಗಳ ಕಾಂತಿಯನ್ನು ಇಳಿಕೆಗೈಯ್ಯುವ.

47 ಬ್ರಹ್ಮಾವರ್ತ—ಸರಸ್ವತೀ ಮತ್ತು ದೃಷದ್ವತೀ ನದಿಗಳ ನಡುವಣ ಭೂಮಿ.

सरस्वतीदृषद्वत्योः देवनद्योर्यदन्तरम् ।
तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ।। ಎಂದು मनुस्मृति ।

जनानां पदं जनपदम् ।

" नीवृज्जनपदौ देशविषयौ तूपवर्तनम् " ಅಮರ

छायया गाहमानः = ನೆಲ್ಲ ನೆರಳನ್ನು ಮಾತ್ರ ಬೀಳಿಸುತ್ತಾ ದಿವ್ಯ ಕ್ಷೇತ್ರಗಳನ್ನು ತುಳಿಯದೆ ಸರಿದು ಹೋಗಬೇಕೆಂಬುದು ನಿಯಮ.

" पीठक्षेत्राश्रमादीनि परीवृत्यान्यतो व्रजेत्

क्षत्राणां प्रधनं तस्य पिशुनं = क्षत्रप्रधनपिशुनम् ।

प्रधनं = ಯುದ್ಧ, "युद्धमायोधनं जन्यं प्रधनं प्रविदारणम्" ಅಮರ

पिशुनं = ಸೂಚಕವಾದ कुरूणां + इदं = कौरवम्

ಕುರುಕ್ಷೇತ್ರವು ದೆಹಲಿಯ ಬಳಯಿರುವ ತಾಣ. ಇಲ್ಲಿಯೇ ಕೌರವ ಪಾಂಡವರ ಸಮರವು ನಡೆದುದು. ಈ ಜಾಗವು ಅದೇ ಹೆಸರಿನ ಸರೋವರದ ಬಳಯಿದೆ. ಆ ಸರೋವರವು ಸ್ಥಾಣೇಶ್ವರಕ್ಕೆ ದಕ್ಷಿಣದಲ್ಲುಂಟು.

गाण्डीवं—ಅರ್ಜುನನ ಬಿಲ್ಲು.

"कपिध्वजस्य गाण्डीवगाण्डीवौ पुन्नपुंसकौ" ಅಮರ गाण्डीवं धनुः यस्य सः= गाण्डीवधन्वा ।

"धनुषश्च" ಎಂಬುದರಿಂದ आनङ् ಆದೇಶ.

राज्ञा अपत्यानि पुमांसः = राजन्याः

"राजश्वशुराद्यत् ಎಂಬುದರಿಂದ यत् ಪ್ರತ್ಯಯ.

48 ह्रित्वा—ತೊರೆದು. हालाम्—ಮದ್ಯವನ್ನು

'सुरा हलिप्रिया हाला" ಅಮರ.

रेवत्याः लोचने अङ्कः यस्यास्तां = रेवतीलोचनाङ्काम्

ರೇವತಿಯು ಪ್ರೀತಿಯಿಂದ ಬಲರಾಮನಿಗೆ ಮಧುಚಷಕವನ್ನು ನೀಡುತ್ತಾಳೆ. ಆಗ ಅವಳ ರಮಣೀಯ ನೇತ್ರದ್ವಯುಗಳು ಅದರಲ್ಲಿ ಪ್ರತಿಫಲಿಸುತ್ತದೆ ಎಂಬುದು ಕವಿಯ ಮನೋಧರ್ಮ.

ಹಿಂದೆ ಒಮ್ಮೆ ಬಲರಾಮ ನೈಮಿಶಾರಣ್ಯಕ್ಕೆ ನಡೆದ. ಅಲ್ಲಿ ಯಾಗವೊಂದು ಜರಗುತ್ತಿತ್ತು. ಸೂತಪುರಾಣಿಕನೊಬ್ಬ ಪ್ರತ್ಯುತ್ಥಾನ ಮಾಡಲಿಲ್ಲ. ಇದರಿಂದ ಕುಪಿತನಾದ ಬಲರಾಮ ಅವನನ್ನು ಸಂಹರಿಸಿದ. ಆದರಿಂದ ಬ್ರಹ್ಮಹತ್ಯಾಪಾತಕವಾವರಿಸಿತು. ಆ ಪಾಪ ನಿವಾರಣೆಗಾಗಿ ಬಲರಾಮನು ಸರಸ್ವತಿಯ ತೀರದಲ್ಲಿ ಘೋರ ತಪವಾಚರಿಸಿದ. ಆ ಕಾರಣ ಸರಸ್ವತಿಯ ಜಲಪಾನವು ಬಲರಾಮನಿಗೆ ಬಹಳ ಮೆಚ್ಚಾಯಿತು ; ಆದುದರಿಂದಲೇ ಆದು ಅಭಿಮತರಸಾ.

सरस्वत्याः + इमाः = सारस्वत्यः + तासां = सारस्वतीनाम् ।

वर्णः एव + वर्णमात्रं तेन = वर्णमात्रेण ।

ನಿನ್ನ ಬಣ್ಣ ಕಪ್ಪಾದರೂ ನಿನ್ನ ಮನಸ್ಸು ಶುದ್ಧವಾದುದು ಎಂಬುದು ಕವಿಯ ಅಭಿಪ್ರಾಯ.

49 ಕನಖಲ ಎಂಬುದು ಹರಿದ್ವಾರದ ಬಳಿಯ ಒಂದು ಕ್ಷೇತ್ರ. ಇಲ್ಲಿಯೇ ಹಿಮವಂತನಿಂದ ಜಗುಳಿದ ಗಂಗೆ ಮೊದಲಿಗೆ ಭೂಸ್ಪರ್ಶ ಮಾಡುವುದು. ಮಲ್ಲಿನಾಥನ ಅಭಿಪ್ರಾಯದಲ್ಲಿ ಇದೊಂದು ಪರ್ವತ.

कनखलस्य समीपे = अनुकनखलम्

"अनुर्यत्समया" ಎಂಬುದರಿಂದ ಅವ್ಯಯೀ (ಭಾವ).

जह्नोः कन्याम्—

ಭಗೀರಥ ತಪಸ್ಸು ಮಾಡಿ ಗಂಗೆಯನ್ನು ಭೂಮಿಗೆ ತಂದ. ಅದು ನೆಲವನ್ನು ಆವರಿಸುವ ಭರದಲ್ಲಿ ಜಹ್ನುವಿನ ಆಶ್ರಮವನ್ನು ನಾಶಮಾಡಿತು. ಕುಪಿತನಾದ ಮಹರ್ಷಿ

ಗಂಗೆಯನ್ನು ಆಪೋಶನ ಮಾಡಿದ. ಮರಳಿ ಭಗೀರಥ ಋಷಿಯನ್ನು ಮೆಚ್ಚಿಸಿ ಗಂಗೆಯನ್ನು ಪಡೆದ ; ಅಂದಿನಿಂದ ದೇವಗಂಗೆಗೆ "ಜಾಹ್ನವೀ" ಎಂದು ಹೆಸರಾಯಿತು.

सगरतनयस्वर्णसोपानपङ्क्तिम्—

ಸಗರನು ಸೂರ್ಯವಂಶದ ಅರಸು. ಅವನ ಪ್ರಥಮ ಪತ್ನಿಗೆ 60,000 ಮಕ್ಕಳು, ದ್ವಿತೀಯ ಪತ್ನಿಗೆ ಅಸಮಂಜಸನೆಂಬ ಒಬ್ಬನೇ ಮಗ. ಸಗರ ಶತಾಶ್ವಮೇಧಗಳನ್ನು ಮಾಡಿದ. ಇಂದ್ರನಿಗೆ ತನ್ನ ಪದವಿ ತಪ್ಪೀತೆಂಬ ಭಯಮೂಡಿತು. ಆತ ಸಗರನ ಯಜ್ಞಾಶ್ವವನ್ನು ಕದ್ದೊಯ್ದ. ಪಾತಾಳದಲ್ಲಿ ಕಪಿಲ ಮಹರ್ಷಿಯ ಆಶ್ರಮದ ಬಳಿ ಬಚ್ಚಿಟ್ಟ. ಸಗರ ಪುತ್ರರು ಅಶ್ವವನ್ನು ಅರಸುತ್ತ ಅತ್ತ ನಡೆದರು. ಕಪಿಲನನ್ನು ನಿಂದಿಸಿದರು. ಅವನ ಕೋಪಾಗ್ನಿಯಿಂದ ಬೂದಿಯಾದರು. ಭಗೀರಥ ಗಂಗೆಯನ್ನು ಭೂಮಿಗೆ ತಂದು ಅವರ ಬೂದಿಯನ್ನು ಕೊಚ್ಚಿಸಿದ. ಅದರ ಫಲವಾಗಿ ಅವರಿಗೆ ಸ್ವರ್ಗವು ದೊರಕಿತು.

गौर्याः वक्त्रे या भ्रुकुटिरचना + तां = गौरीवक्त्रभ्रुकुटिरचनाम् ।

इन्दुलग्नाः ऊर्मयः एव हस्तं यस्याः सा = इन्दुलग्नोर्मिहस्ता ।

50 पश्चार्धेन लम्बत इति = पश्चार्धलम्बी ।

अच्छं यत् स्फटिकं तद्वत् विशदं = अच्छस्फटिकविशदम् ।

आस्थाने उपगतः यमुनासङ्गमः यया सा = अस्थानोपगत यमुनासङ्गमा ।

ಗಂಗಾ ಯಮುನಾ ನದಿಗಳು ಪ್ರಯಾಗದಲ್ಲಿ ಕೂಡುತ್ತವೆ. ಕನಖಲದಲ್ಲಿ ಅಲ್ಲ. ಆ ಕಾರಣ ಕನಖಲವು ಅಸ್ಥಾನ ಎಂಬುದು ಕವಿಯ ಅಭಿಪ್ರಾಯ.

51 नाभिगन्धः = ಕಸ್ತೂರಿಮೃಗ.

सुरभिताः शिलाः यस्य तं = सुरभितशिलम् ।

गौरम्—ಬಿಳಿದಾದ "अवदातः सितो गौरः" ಅಮರ

अध्वश्रमस्य विनयनं तस्मिन् = अध्वश्रमविनयने

शुभ्रः यः त्रिनयनस्य वृषा तेन उत्खातं यत् पङ्कः तेन उपमातुमर्हा + तां =

शुभ्रत्रिनयनवृषोत्खातपङ्कोपमेयाम् ।

ಇಲ್ಲಿ ಹಿಮವು ಉಪಮೇಯ, ನಂದಿ ಉಪಮಾನ. ಮೋಡವು ಉಪಮೇಯ
ಮಣ್ಣು ಹೆಂಟೆ ಉಪಮಾನ.

52 सरलानां स्कन्धाः तेषां संघट्टेन जन्म यस्य सः =सरलस्कन्धसंघट्टजन्मा ।
उल्काभिः क्षपिताः चमरीणां वालभाराः येन सः =उल्काक्षपितचमरीवालभारः
ಈ ಪದ್ಯದಲ್ಲಿ ಅರ್ಥಾಂತರನ್ಯಾಸವೆಂಬ ಅಲಂಕಾರವಿದೆ.

53 संरम्भ—ಕೋಪ संरम्भः सङ्क्रमे कोपे ಎಂದು ಶಬ್ದಾರ್ಣವ
रभसः—ವೇಗ "रभसो वेगहर्षयोः" ಅಮರ
संरम्भेण उत्पतने रभसः येषां ते =संरम्भोत्पतनरभसाः ।
ಶರಭ=ಪೂರ್ವಯುಗದ ಒಂದು ಪ್ರಾಣಿ ; ಅವುಗಳಿಗೆ ಎಂಟು ಕಾಲುಗಳಿದ್ದುವಂತೆ.
मुक्तः अध्वा येन तं =मुक्ताध्वानम् ।
तुमुलाः करकाः तेषां वृष्टिः तस्याः पातेन अवकीर्णाः तान् = तुमुलकरकावृष्टिपातावकीर्णान् ।
करकाः—ಆಲಿಕಲ್ಲುಗಳು "वर्षोपलस्तु करकः" ಅಮರ
निष्फलः आरम्भेषु यत्नः येषां ते = निष्फलारम्भयत्नाः ।

54 उपचितः बलिः यस्य तं = उपचितबलिम् ।
अर्धेन्दुः मौलौ यस्य सः + तस्य = अर्धेन्दुमौलेः ।
करणस्य विगमः तस्मात् = करणविगमात् ।
स्थिरं गणानां पदं तस्य प्राप्तये = स्थिरगणपदप्राप्तये ।
ಶಂಭು ರಹಸ್ಯದ ಈ ಹೇಳಿಕೆಯನ್ನು ಪರಿಗಣಿಸಿ :

अव्यक्तं व्यञ्जयामास शिवः श्रीचरणद्वयम् ।
हिमाद्रौ शाम्भवादीनां सिद्धये सर्वकर्मणाम् ॥
दृष्ट्वा श्रीचरणन्यासं साधकः स्थितये तनुम् ।
इच्छाधीनशरीरो हि विचरेच्च जगत्त्रयम् ।

55 कीचकः—ರಂಧ್ರವಿರುವ ಬಿದಿರು.
"कीचका वेणवस्ते स्युः येस्वनन्त्यनिलोद्धताः" ಅಮರ
त्रिपुरस्य विजयः = त्रिपुरविजयः ।

56 तटस्य समीपे = उपतटम्   भृगुपतेः यशः तस्य वर्त्म = भृगुपतियशोवर्त्म ।
ಪರಶುರಾಮ ಯುವಕನಿದ್ದಾಗ ಪರಶಿವನಿಂದ ಅಸ್ತ್ರವಿದ್ಯೆಯನ್ನು ಅರಿತ. ಆತ ಕ್ರೌಂಚ ಪರ್ವತವನ್ನು ಬಾಣದಿಂದ ಛೇಧಿಸಿದ. ಆಗ ಪರ್ವತದಲ್ಲಿ ಒಂದು ರಂಧ್ರವಾಯಿತು. ಹಂಸಗಳ ಗಮನಾಗಮನಕ್ಕೆ ಅದೇ ಹತ್ತಿರದ ದಾರಿಯಾಯಿತು.
बलेः नियमनं तस्मिन् अभ्युद्यतः + तस्य = बलिनियमनाभ्युद्यतस्य ।
तिर्यक् आयामेन शोभत इति = तिर्यगायामशोभी ।

57 दशमुखस्य भुजाः तैः उच्छ्वासिताः प्रस्थानां सन्धयः यस्य तस्य = दशमुख भुजोच्छ्वासितप्रस्थसन्धेः ।    कुमुदवत् + विशदैः = कुमुदविशदैः ।

58 स्निग्धं भिन्नं च यत् अञ्जनं यस्य तस्मिन् = स्निग्धभिन्नाञ्जनाभे ।
सद्यः कृत्तस्य द्विरददशनस्य छेदवत् गौरस्य = सद्यःकृत्तद्विरददशनच्छेदगौरस्य
स्तिमिताभ्यां नयनाभ्यां प्रेक्षणीया + तां = स्तिमितनयनप्रेक्षणीयाम् ।

59 हेमाम्भोजानां प्रसवि = हेमाम्भोजप्रसवि ।
कल्पद्रुमाणां किसलयानि = कल्पद्रुमकिसलयानि ।    निर्विशेः = ಅನುಭವಿಸು.

60 स्रस्तं गङ्गादुकूलं यस्याः तां = स्रस्त गङ्गादुकूलाम् ।
उच्चैः विमानानि यस्यां सा = उच्चैर्विमाना ಈ ಪದವನ್ನು कामिनी ಎಂಬ ಪದ ದೊಡನೆಯೂ ಅನ್ವಯಿಸಬೇಕು.   विगतः मानः यस्याः सा विमाना, उच्चैः विमाना = उच्चैर्विमाना ಕೋಪವಿಲ್ಲದ.

### ಪ್ರಶ್ನೆಗಳು

1. ಕಾಳಿದಾಸನ ಜೀವನ, ಕಾಲ ಮತ್ತು ಕೃತಿಗಳನ್ನು ಕುರಿತು ಒಂದು ಟಿಪ್ಪಣಿ ಬರೆಯಿರಿ.
2. ಮೇಘನು ದೂತನಾದ ಹಿನ್ನೆಲೆಯನ್ನು ಕವಿಯ ಮಾತಿನಲ್ಲಿ ವರ್ಣಿಸಿ. (1-7)

3. ದಿವ: ಕಾನ್ತಿಮತ್ ಖಣ್ಡಮೇಕಂ ಎಂದು ಕವಿ ಪ್ರಶಂಸಿರುವ ವಿಶಾಲಾ ಪಟ್ಟಣದ ವೈಭವ ವಿಲಾಸಗಳನ್ನು ವರ್ಣಿಸಿ.

4. ದೇವಗಿರಿಯಲ್ಲಿ ಸ್ಕಂದ ಸ್ವಾಮಿಯನ್ನು ಮೇಘವು ಹೇಗೆ ಆರಾಧಿಸಬೇಕು ?

5. ಮೇಘದೂತನ ಮಾರ್ಗವನ್ನು ಸಂಗ್ರಹವಾಗಿ ವರ್ಣಿಸಿ.

6. ಈ ಪದ್ಯಭಾಗದಲ್ಲಿರುವ ಎಲ್ಲಾ ಅರ್ಥಾಂತರನ್ಯಾಸಾಲಂಕಾರೋದಾಹರಣೆಗಳನ್ನು ಕ್ರೋಡೀಕರಿಸಿ.

# ಚಂಪೂ ರಾಮಾಯಣಂ

**ಚಂಪೂಕಾವ್ಯದ ಬೆಳವಣಿಗೆ—**

ಸುಂದರ ಶಬ್ದಾರ್ಥಯುಗಳವನ್ನು ಕಾವ್ಯವೆಂದು ಕರೆಯುತ್ತಾರೆ. ಇವು ದೃಶ್ಯ, ಶ್ರವ್ಯ ಮಿಶ್ರ ಎಂದು ಮೂರು ಬಗೆಯುಂಟು. ಶಾಕುಂತಲಾದಿ ನಾಟಕಗಳು ದೃಶ್ಯಗಳು ; ರಘುವಂಶಾದಿಗಳು ಶ್ರವ್ಯಗಳು ; ಗದ್ಯ ಪದ್ಯಮಿಶ್ರಿತವಾದ ಚಂಪುವೇ ಮಿಶ್ರಕಾವ್ಯ. ಗದ್ಯ ಪದ್ಯ ಮಿಶ್ರಿತವಾದ ಕಾವ್ಯವು ಪಕ್ಕ ವಾದ್ಯದಿಂದ ಕೂಡಿದ ಗೀತೆಯಂತೆ ಮನೋಹರವಾಗಿರುತ್ತದೆ.

ಗದ್ಯಾನುಬಂಧರಸಮಿಶ್ರಿತ ಪದ್ಯಸೂಕ್ತಿಃ
ಹೃದ್ಯಾ ಹಿ ವಾದ್ಯಕಲಯಾ ಕಲಿತೇವ ಗೀತಿಃ

ಎಂದು ಭೋಜರಾಜನ ನುಡಿಯುಂಟು.

'ಗದ್ಯ ಪದ್ಯಮಯಂ ಕಾಚಿತ್ ಚಂಪೂರಿತ್ಯಭಿಧೀಯತೇ' ಎಂದು ಕ್ರಿ. ಶ. 7ನೆಯ ಶತಮಾನದಆಚಾರ್ಯ ದಂಡಿ ಲಕ್ಷಣ ನೀಡಿದ್ದಾನೆ. ಆ ಕಾರಣ ಅದಕ್ಕೂ ಮುಂಚೆಯೇ ಚಂಪೂ ಗ್ರಂಥಗಳಿದ್ದಿರಬೇಕು. ಆದರೂ ಯಾವೊಂದೂ ದೃಗ್ಗೋಚರವಾಗಿಲ್ಲ. ಹರಿಚಂದ್ರನ ಜೀವಂಧರ ಚಂಪು 9ನೆಯ ಶತಮಾನಕ್ಕೆ ಸಂಬಂಧಿಸಿದುದು. ಬಾಣಸ್ತುತನಾದ ಹರಿಚಂದ್ರ ಗದ್ಯರಚನಾ ಪಟುವೇ ಹೊರತು ಚಂಪೂಕಾರ[illegible]. ಆದರೆ ವೇದದ ಉಪಾಖ್ಯಾನಗಳಲ್ಲಿ ಹಲವಾರು ಪುರಾಣಗಳಲ್ಲಿ ಶಾಸನಗಳಲ್ಲಿ ಇಂತಹ ರ[illegible]ಾವಿನ್ಯಾಸವನ್ನು ಗುರುತಿಸಬಹುದು. ಬೌದ್ಧರ ಜಾತಕ ಕಥೆಗಳಲ್ಲಿ ಈ ರೀತಿಯು ಕಾಣಬ[illegible]ತ್ತದೆ. ಸದ್ಯಕ್ಕೆ ದೊರೆತಿರುವ ಚಂಪೂಗಳೆಲ್ಲ ಕ್ರಿಶ 10 ನೆಯ ಶತಮಾನದಿಂದ ಈಚಿನವು. ತ್ರಿವಿ[illegible]ಮನ ನಳಚಂಪು, ಸೋಮದೇವನ ಯಶಸ್ತಿಲಕ, ಭೋಜನ ಚಂಪೂರಾಮಾಯಣ, ಅನಂತ[illegible]ಟ್ಟನ ಚಂಪೂಭಾರತ ಇವುಗಳಲ್ಲಿ ಪ್ರಸಿದ್ಧವಾದುವು. ಈ ನಿಟ್ಟಿನಲ್ಲಿ ವೆಂಕಟಾಧ್ವರಿಯ ವಿಶ್ವ[illegible]ಣಾದರ್ಶವು ಸ್ಮರಣೀಯವಾದುದು. ನೀಲಕಂಠದೀಕ್ಷಿತನ ನೀಲಕಂಠಚಂಪು ಬಹಳ ಪ್ರಸಿದ್ಧವಾದು[illegible]ು. ಸಂಸ್ಕೃತ ಸಾಹಿತ್ಯದಲ್ಲಿ ಪಂಚಮಹಾಕಾವ್ಯಗಳಂತೆ

ಚಂಪೂರಾಮಾಯಣ, ಭಾರತ, ವಿಶ್ವಗುಣಾದರ್ಶ, ನೀಲಕಂಠವಿಜಯ, ಯಶಸ್ತಿಲಕಗಳು ಪಂಚ ಚಂಪೂಗಳೆಂದು ಪ್ರಸಿದ್ಧವಾಗಿವೆ.

**ಚಂಪೂರಾಮಾಯಣದ ಕವಿ—**

ಧಾರಾ ನಗರದ ಅರಸು ಭೋಜ ಇದರ ಕರ್ತೃ. 'ಇತಿ ವಿದರ್ಭರಾಜವಿರಚಿತೇ' ಎಂಬ ಸಮಾಪ್ತಿ ವಾಕ್ಯವು ಪ್ರತಿಕಾಂಡದಲ್ಲೂ ಬರುತ್ತದೆ. ಲಕ್ಷ್ಮಣಸೂರಿಯು ಇದರ ಕರ್ತೃವು ಭೋಜನೆಂದು ಸ್ಪಷ್ಟವಾಗಿ ನುಡಿದಿದ್ದಾನೆ. ಧಾರಾನಗರವು ಅವನ ರಾಜಧಾನಿ. ಆದರೆ ವಿದರ್ಭವು ಬೇರಾರಿಗೆ ಸೇರಿದ್ದು ಭೌಗೋಳಿಕವಾಗಿ ಇವೆರಡನ್ನು ಒಂದುಗೂಡಿಸುವುದು ಸಾಧ್ಯವಿಲ್ಲ. ಭೋಜನು ಕಾಶ್ಮೀರದ ಅನಂತವರ್ಮನ ಸಮಕಾಲಿಕ ; 1018 ರಿಂದ 1063 (ಕ್ರಿ.ಶ.) ವರೆಗೆ ಅವನ ಆಳ್ವಿಕೆ ಸಾಗಿತ್ತು. ಅಬುಲ್ ಫಸಲ್ ಎಂಬ ಚರಿತ್ರಕಾರನು ತನ್ನ ಅಯುನಿ ಅಕ್ಬರಿ ಎಂಬ ಗ್ರಂಥದಲ್ಲಿ ಭೋಜನು ಉಜ್ಜಯಿನಿಯಿಂದ ತನ್ನ ರಾಜಧಾನಿಯನ್ನು ಧಾರಾ ನಗರಕ್ಕೆ ಬದಲಾಯಿಸಿದನೆಂದು ನುಡಿದಿದ್ದಾನೆ.

ಭೋಜನು ಕವಿಯಾಗಿದ್ದಂತೆ ಕಲಿಯೂ ಆಗಿದ್ದನು. ಮಹಮದ್ ಘಸ್ನಿಯ ಪಡೆಯೊಂದಿಗೆ ಈತನು ಹೋರಾಡಿದನು ಎಂಬುದಕ್ಕೆ ಶಾಸನಾಧಾರಗಳುಂಟು. ಇವನು ಕವಿಯಾಗಿದ್ದುದರ ಜತೆಗೆ ಕವಿ ಪೋಷಕನೂ ಆಗಿದ್ದುದು ಹೆಮ್ಮೆಯ ವಿಷಯ. ಸದ್ಯಕ್ಕೆ ಮಸೀದಿಯಾಗಿರುವ ಧಾರಾನಗರದ ಸ್ಥಳವು ಸರಸ್ವತಿಗಾಗಿ ಕಟ್ಟಿಸಿದ ಮಹಾಮಂದಿರವಾಗಿತ್ತು. ಭೂಪಾಲದ ನೈಋತ್ಯಕ್ಕಿರುವ ಭೋಜ ಸರೋವರವು ಈತನ ವಾಸ್ತುಶಿಲ್ಪಜ್ಞಾನಕ್ಕೆ ಸಾಕ್ಷಿಭೂತವಾದುದು. ಈ ಸರೋವರವು ಕ್ರಿ.ಶ 15ನೆಯ ಶತಮಾನದವರೆಗೂ ಉಳಿದಿತ್ತು. ಭೋಜಪ್ರಬಂಧವನ್ನು ಬರೆದ ಬಲ್ಲಾಳ ಈತನ ಬಗ್ಗೆ ಒಂದು ಗ್ರಂಥವನ್ನು ರಚಿಸಿದ್ದಾನೆ. ಆದರೆ ಐತಿಹಾಸಿಕ ಕ್ರಮ ಅದಕ್ಕೆ ಸಿಗದು. ಭೋಜರಾಜಚರಿತಂ ಎಂಬ ಎರಡು ಅಂಕಗಳ ಒಂದು ನಾಟಕವೂ ಉಂಟು.

ಭೋಜನು ಸಕಲ ಶಾಸ್ತ್ರಜ್ಞ, ಅವನ ಕೃತಿ ಸಹಸ್ರಗಳೇ ಅದಕ್ಕೆ ಸಾಕ್ಷಿ. ವ್ಯಾಕರಣ, ಸಾಹಿತ್ಯ, ವೇದಾಂತ, ಸಾಂಖ್ಯ ಮುಂತಾದ ಎಲ್ಲ ಶಾಸ್ತ್ರಗಳ ಮೇಲೂ ಅವನಿಗೆ ಪ್ರಭುತ್ವವಿತ್ತು. ಸರಸ್ವತೀ ಕಂಠಾಭರಣ, ಶೃಂಗಾರ ಪ್ರಕಾಶ, ಸಂಗೀತಪ್ರಕಾಶ, ಶಿವದತ್ತಸ್ತೋತ್ರ, ಚಂಪೂ ರಾಮಾಯಣ, ಸಮರಾಂಗಣ ಸೂತ್ರಧಾರ ಮುಂತಾದುವು ಅವನ ಸ್ವಂತ ರಚನೆಗಳು. ಅಲ್ಲದೆ ಭೋಜನು ಅನೇಕ ವ್ಯಾಖ್ಯಾನ ಗ್ರಂಥಗಳನ್ನೂ ಬರೆದಿದ್ದಾನೆ. ರಾಜಮಾರ್ತಂಡ, ರಘುವಂಶ ವ್ಯಾಖ್ಯಾನ, ರಾಜವಾರ್ತಿಕ ಇವು ಉಲ್ಲೇಖಾರ್ಹವಾದುವು.

ಚಂಪೂ ರಾಮಾಯಣವು ಸರಳವಾದ ವೈದರ್ಭೀ ಶೈಲಿಯಲ್ಲಿದೆ. ದಿನಬಳಕೆಯ ಉಪಮಾನಗಳು, ವರ್ಣನಾಚಾತುರ್ಯ ಹಿತಮಿತವಾದ ಅಲಂಕಾರಗಳ ಬಳಕೆ, ಶಬ್ದಾಲಂಕಾರ ವೈಚಿತ್ರ್ಯ ಮುಂತಾದುವು ಇವನನ್ನು ಉನ್ನತ ಕವಿಗಳ ಸಾಲಿಗೆ ಸೇರಿಸುತ್ತವೆ.

**ಚಂಪೂರಾಮಾಯಣದ ವೈಶಿಷ್ಟ್ಯ—**

ಚಂಪೂರಾಮಾಯಣವು ಗದ್ಯ ಪದ್ಯಾತ್ಮಕವಾದ ಕೃತಿ. ವಾಲ್ಮೀಕಿ ರಾಮಾಯಣ ಇದಕ್ಕೆ ಆಧಾರ. ಕವಿಯು ಅನೇಕ ವೇಳೆ ವಾಲ್ಮೀಕಿಯ ಪದ ಗುಂಫನನ್ನೇ ಚೆಲುವಾಗಿ ಬಳ ಸ್ತಾನೆ. ಪ್ರತಿ ಕಾಂಡದ ಆದಿ ಪದ್ಯವೂ ರಾಮಾಯಣದ ಕಾಂಡಗಳ ಆದಿಪದದಿಂದಲೇ ಆರಂ ವಾಗುವುದೂ ವೈಶಿಷ್ಟ್ಯ. ವಾಲ್ಮೀಕಿರಾಮಾಯಣವನ್ನು ಅನುಸರಿಸಿ ಕವಿಯು ಜನಪ್ರಿಯ ಯನ್ನು ಗಳಿಸಿದ್ದಾನೆ. ಈ ಜನಪ್ರಿಯತೆಗೆ ಅವನ ಶೈಲಿಯೂ ಕಾರಣವಾಗಿದೆ. ಇದ ಪ್ರಸಿದ್ಧವಾದ ಕೃತಿಯಾಗಿದ್ದರೂ ಅಪೂರ್ಣವಾಗಿದೆ. ಸುಂದರಕಾಂಡ ಪೂರ್ತಿ ಅವನ ರಚನ ಉಳಿದ ಯುದ್ಧಕಾಂಡವನ್ನು ಅನೇಕ ಮಂದಿ ರಚಿಸಿದ್ದಾರೆ ಲಕ್ಷ್ಮಣಸೂರಿ, ರಾಜಚೂಡ ಮಣಿ ದೀಕ್ಷಿತ, ವೇಂಕಟಾಧ್ವರಿ ಮುಂತಾದವರು ಅವರಲ್ಲಿ ಪ್ರಮುಖರು. ಈ ಚಂಪೂ ಕುರವಿ ರಾಮಚಂದ್ರ, ನಾರಾಯಣ, ಮಾನದೇವ, ಘನಶ್ಯಾಮ ಮುಂತಾದವರು ಸುಂದರವಾ ವ್ಯಾಖ್ಯಾನವನ್ನು ಬರೆದಿದ್ದಾರೆ.

# अ) चम्पूरामायणम्

## सुन्दरकाण्डः

ततो हनुमान् दशकण्ठनीतां
सीतां विचेतुं पथि चारणानाम् ।
महेन्द्रशैलस्य खगेन्द्रवेगः
प्रस्थादुदस्थात्प्रथमानमानः ॥ १ ॥

तदानीमुदन्वदुल्लंघनदृढतरनिहितचरणनिष्पीडनं सोढुमक्षमः क्षमाभृदे निश्शेषनिस्सरन्निर्झरौघतया निरन्तरनिष्पतद्बाष्पवर्ष इव, इतस्ततो विततजीमूतवृन्दतया पारिप्लवशिथिलधम्मिल्ल इव, सन्त्रस्यमानकुञ्जरयूथतया सञ्जातश्वयथुरिव, साध्व सधावमानहरिणगणचरणखरतरखुरकोटिपाटनोद्धूतधातुधूलीपालीपाटलितविकटकटक- तया क्षरितशोणित इव, तत्क्षणप्रबुद्ध कण्ठीरव मुखरित कन्दरतया कृताक्रन्द इव, परि

सरगह्वरनिबिरीसनिस्सरत्सरीसृपतया निर्गलितान्त्रमाल इव, घूर्णमानतरुविटपकोटिघाटितजलदवृन्दस्यन्दितशीकरकोरकिताकारतया समुपजातस्वेद इव, स्फटिकतटोपकपतनदलितकीचकसुषिरसम्मूर्च्छत्पवनफूत्कारपूरितगगनतया प्रवर्धमानोर्ध्वश्वास इव वचसामविषयं दौस्स्थ्यमभजत ।

कृत्वा मारुतिलंघनोत्थितरयात्तत्रानुयात्रां ततः
पर्यायात्पतिता महेन्द्रगहनक्षोणीरुहाणां ततिः ॥
मध्ये वारिनिधिप्रकाशितशिखा सेतोः कृते भाविनः
सूत्रन्यासनिखातशङ्कुनिवहभ्रान्तिं पयोधौ दधौ ॥ २ ॥

पक्षाभिघातरयरेचितवीचिमालात्
पाथोनिधेः पवननन्दनविश्रमाय ।
उत्तुङ्गशृङ्गकुलकीलितनाकलोको
मैनाकभूभृदुदजृम्भत सम्भ्रमेण ॥ ३ ॥

तत्र यात्राप्रत्यूहः प्रत्युद्भूत इति वक्षसा तमधः पातयित्वा प्रयान्तमेनं सान्त्वयन् हिरण्यनाभो बभाषे ।

सागरेण कृतज्ञेन
तवाध्वश्रान्तिशान्तये ।
मारुते प्रेरितोऽभ्यद्य
सौम्य विश्रम्य गम्यताम् ॥ ४ ॥

तव पित्रा परित्रातः
पूर्वं पर्वतभेदिनः ।
तस्मान्नास्मि विपक्षोऽद्य
सपक्ष इति मां भज ॥ ५ ॥

एवं प्रार्थ्यमानमेनं सम्मान्य कार्यगत्या गते सति हनूमति—

अवलोक्य हिरण्यनाभमब्धौ
बलमानं बलमानभाथिवज्रः ।
शतमन्युरपेतमन्युरासीत्
पवमानात्मजसेवनादमुष्मिन् ॥ ६ ॥

तदनु यथापुरं लङ्कापुरं प्रति प्रधावतो हनूमतस्सरणिमरुणदरुणसारथेः प्र
विन्ध्य इव, वदनं व्यादाय द्विरसनजननी रंहसा सुरसा ।

उज्जृम्भितस्य तरसा सुरसां विजेतुं
पादौ पयोधिकलितौ पवमानसूनोः ।
तस्योत्तमाङ्गमभवद्गगनस्रवन्ती-
वीचीचयस्खलितशीकरमालभारि ॥ ७ ॥

तनुं तनूकृत्य तदा हनूमान्
कृत्वावगाहं जठरे तदीये ।
ततो विनिष्क्रम्य स चक्रपाणे-
स्त्रिविक्रमस्य क्रममेव चक्रे ॥ ८ ॥

भूयोऽपि सोऽयं रघुनाथदूत-
श्चिच्छेद गच्छन्नखरैः खराग्रैः ।
नृसिंहरंहाः पथि सिंहिकाङ्गं
छायानिरोधादुपपन्नमन्युः ॥ ९ ॥

तदनु पारावारस्य पारे लम्बशिखरिणि लम्बमानः प्रतनुतरवपुर्लङ्कापुरोत्तरगो
द्वारमासाद्य नितान्तचिन्तातन्तुसन्तान सन्दानितान्तःकरणोऽभूत् ।— "वानरो
कथं तरेदिममन्तरायं वितन्वन्तमुदन्वन्तम् ? तरतु नाम ; कथमुपयातु यातुधा
राजधानीमिमाम् ? सर्वथापि वितथमनोरथो दाशरथिः । मोघीकृतार्णवलङ्

केवलमहमभवम् । जीवति वा न वेति न जानामि जानकी" इति । तत्र तत्र भगवतीं सीतामवजिगमिषुराञ्जनेयः प्रच्छन्नसञ्चारहेतोरस्तमयं गभस्तिमालिनः केवलमभिललाष । तदनु शातमखस्यागस्त्यसन्निधौ निक्षिप्तचापस्य प्रत्यासीदति प्रयोजनवेलेति प्रचेतसे कथयितुमिव प्रतीचीं दिशं प्रविशति भगवति भास्वति,—

गगनतलमिदमपरमहीधरकटककान्तारसमुद्भवदावपावकशिखाश्रेणिभिः किमु शोणितम् ? अथवा समीपमवतरत्पतङ्गरश्मिदृढतरवेष्टननिष्ठ्यूतानलतट तपनोपलजालसमुल्लसज्ज्वालापटलैः किमापाटलितम् ? आहोस्विदागताय मित्राय महार्घमर्घ्यं प्रदातुं प्रमुदितचेतसा प्रचेतसा तूर्णमर्णवोदरोद्गीर्यमाणमाणिक्यकिरणैः किमरुणितम् ? आहोस्विच्चारापथतरङ्गिणीसलिलमपि रसयितुमुज्जृम्भितस्य चरमसागरौर्वाग्नेः अर्चिःपुञ्जेन किमिह रञ्जितम् ? इति सकलजनस्य सन्देहसंदोहं सन्दधाने सन्ध्यारागे समुदञ्चिते, सरसीरुहश्रेणिषु पत्रपुटकपाटपिधानासु, प्रतिकुमुदभवनं मकरन्दभिक्षामटत्सु मधुव्रतद्विजेषु, विकचकुवलयकलिकाकर्षणकषायेषु सायन्तनवायुषु, तत इतस्सञ्चरत्सु तिमिरेषु, कालागरुधूमस्तोमश्यामलितेषु दिक्पालपुरगोपुरव्यूहेषु, प्रतिकमलाकरं प्रेङ्खते विश्लेषवेदनापूर्वरङ्गे रथाङ्गविहङ्गदीनकेङ्कारे, नक्षत्रमालालङ्कृते गगनमतङ्गजे—

आविर्बभूव पूर्वाद्रेः
शृंगे शृङ्गारजीवितम् ।
तमस्तमालकान्तार-
कुठारश्शशलाञ्छनः ॥ १० ॥

तस्करास्तमसा रुद्धा
रेजिरे गगनाजिरे ।
शैवालचयसञ्छन्नाः
सरसीव बिसाङ्कुराः ॥ ११ ॥

तस्मिन्प्रदोषसमये सहसा हनूमान्
कीर्तिच्छटायवनिकामपनीय शत्रोः ।
आविर्बभूव सुमनःपरितोषणाय
लङ्काप्रवेशनवनाटकसूत्रधारः ॥ १२ ॥

तत्काले लङ्काधिदेवतामात्मना सह विग्रहं विधातुं गृहीतयुवतिविग्रहां मार्गप्रसारस्यार्गलीभूय भूयसा तर्जयन्तीं निर्जित्य तया वानररचितावज्ञोपज्ञं निजनिलयविलयं सरसिजासनशासनादावेदयन्त्या विहितानुमतिर्मारुतिर्लङ्कायामविकलमेव मैथिलीं विचिन्वन् नैर्ऋतचक्रवर्तिनः प्रासादमाससाद । तत्र—

एषा राक्षससार्वभौमनगरी रक्षश्चमूरक्षिता
तस्येदं सदनं सुवर्णशिखरं बिभ्राणमभ्राबलिम् ।
एतत्पुष्पकमाहृतं धनपतेरित्यादरान्मारुते-
स्तत्रादर्शयदिन्दुदीपकिरणप्रद्योतिताशा निशा ॥ १३ ॥

अपि च—

आदित्यः कृतकृत्य एष भविता सीतापतेरीदृशं
साहाय्यं विरचय्य कीर्तिमतुलामादित्सुना सूनुना ।
इत्यालोच्य तदा किल स्वयमपि ख्यातिं ग्रहीतुं परां
लङ्कायां रघुनाथदूतसरणौ चन्द्रेण दीपायितम् ॥ १४ ॥

एवमेव पर्यटन्नस्वप्नसुन्दरीसौन्दर्यमुद्रां निद्रयाप्यतिशाय्यशय्यागृहे कृतसंवेशं वेशयुवतिपरिवृतमवरोधवधूजनमप्यनिरोधेन निरीक्ष्य तत्र वितथमनोरथो मारुतिर्विरचितबहुविधचिन्ताप्रकारः प्राकारादवप्लुतः सन् अशोकवनिकायामपि मैथिलीमन्वेष्टुमिष्टदेवताप्रणतिमतनुत ।

असौ जनकनन्दिनीं तत इतो विचिन्वन्क्षणा-
दशोकवनिकामगादपगतान्यमार्गभ्रमः ।

परामभिलषन्गाति शमघनो यथा निर्मम-
स्त्रयीमखिलकिल्बिषप्रशमनैकदिव्यौषधिम् ॥ १५ ॥

ततस्तस्यां नाग-पुन्नाग-ताल-हिन्ताल-तमाल-कृतमाल-सरल-वकुल-वञ्जुल-तिलक-आमलक-कुटज-लिकुच-कतक-कक्कोल-अङ्कोल-लवङ्ग-विकङ्कत-केतकी-कदम्ब-उदुम्बर-कपित्थ-अश्वत्थ-कुरुवक-मरुवक-माकन्द-कुन्द-तिन्दुक-चन्दन-स्यन्दन-चम्पक-चाम्पेय-पनस-वेतस-पलाश-पाटल-परिवृतायां परिभ्रमन् अभ्रङ्कष रसाल प्रियाल प्रायैरनेकैरनोकहनिवहैः परिवृतायां परिभ्रमन् अभ्रङ्कष विटपनिबिडितगगनप्रपञ्चां काञ्चन काञ्चनमयीं शिंशपामारुरोह ।

तत्र तत्पत्रसञ्छन्न-
गात्रः पुत्रो नभस्वतः ।
न्यग्रोधदलसंलीन-
जनार्दनदशां दधौ ॥ १६ ॥

मल्लीं चूतवनादिव स्नुहिवने म्लेच्छेन संस्थापितां
मालां देवकुलादिवामिषधिया क्षिप्तां श्मशाने शुना ।
देवीमाश्रमतस्तथा स्वभवनं नक्तञ्चरेण च्छला-
दानीतामपनीतवेषरचनामालोकयन्मारुतिः ॥ १७ ॥

पुनरयमेनामालोक्यैवं चिन्तां ततान—

ज्योत्स्नां विनापि निवसेन्निशि शीतभानु-
श्छायां विनापि विलसेद्दिवसेश्वरोऽपि ।
एनां विना रघुपतिः परिगृह्य धैर्यं
सप्राण एव वसतीति विचित्रमेतत् ॥ १८ ॥

एवं चिन्तयता हनूमता कथमपि निशीथसमये गते निशिथिनी नाथेऽपि चरमगिरिशिखरोपकण्ठसेवामुत्कण्ठमाने दशकण्ठस्तु निद्राशेषेण स्मरशरप्रहारेण च कलुषीकृताक्षः, सरसहरिचन्दनचर्चया जानकीदर्शनेच्छया च प्रकटितरागः,

वैकक्षमालया मुकुटरत्नप्रभया च तिरस्कृतनक्षत्रमालः शनैश्शनैरविशदशोकवनिकाम् ।

रजनिचरमभागे वारसीमन्तिनीनां
करतलकलिताभिर्दीपिकामार्जनीभिः ।
दिशि दिशि परिमृष्टं यत्तमस्तत्समस्तं
हृदयमवजगाहे केवलं रावणस्य ॥ १९ ॥

सोऽयं मदान्धहृदयो रघुवीरपत्नीं
सीमन्तिनीति हृतनीतिरवाप पापः ।
आमूलपल्लविलकोमलसल्लकीति
वैतानपावकशिखामिव वारणेन्द्रः ॥ २० ॥

एतद्दर्शनेन वेपमानतनुलता मैथिली कापुरुषविषयपारम्पर्येण विदीर्यमाणहृदया हृदयदयितशौर्यप्रत्ययादमुमेव तृणमन्तरतः कृत्वा स्थिता पर्यभाषत—"अयि, सकलसमाचारप्रतिष्ठानिष्ठः परमेष्ठी ननु कुलगुरुर्भवतः ? परकलत्रगात्रनेत्रप्रसक्तिरप्यपत्रपां जनयति हि गोत्रजातानाम् । भूयोऽपि पञ्चवटीपरिसरममुं जनमनुकूलप्रभञ्जन इवानुकूलः कूलोपकण्ठं परिभ्रष्टां नावमिव यदि नयेथास्तर्हि तवापि दयते नियतं मदीयो जीवितेशः साक्षात्-जीवितेशोऽपि त्वयि दयालुर्भवेत् । दाशरथेरजेयस्य मैत्र्याः पात्रमपि भवितासि । किन्तु खरप्रमुखनिशाचरबलमथनसमयरुचिरलग्नसान्द्रवसापङ्किलमुखमार्यपुत्रस्य शिलीमुखं भवन्तमन्तरेण कः श्रद्दधीत निजहृदयगलितरुधिरधारया प्रक्षालयितुम् ? अथवा जनस्थान समरादारभ्य समराभावावग्रहतृषितानां सौमित्रिपत्त्रिचातकानां शोणिताम्बुपारणां तवापनयश्चेत्कः समर्थो निवारयितुम् ?"

अथ निशिचरनाथं पञ्चबाणीविभिन्नं
न हि जनकसुतायाः प्रापदेकापि वाणी ।
जनमुपनतमृत्युं पञ्चवक्त्राहिदष्टं
विशति हतविषाघेरोषधेः किं नु शक्तिः ॥ २१ ॥

एवं जनकदुहितुः अवधीरणाफणितिमाकर्ण्य कोपपराङ्मुखो दशमुखस्तामभितो निवसन्तीरारक्षिकराक्षसीरुद्दिश्य 'भवत्यश्चतुर्भिरप्युपायैरेनामवश्यं वश्यां कुरुध्वम् । इयमननुकूला चेदिमां हताशां मे प्रातरशनाय महानसं नयत' इत्यादिश्य निशान्ते प्रत्यासन्ने निशान्तमेव प्रविवेश । तदनु क्षणदाचरीणां भीषणवीक्षणवाग्दोषोन्मेषेण मुकुलितहृदयपुण्डरीका पुण्डरीकयूथपरिवृतसारङ्गाङ्गनाभङ्गीमङ्गीकुर्वाणा गीर्वाण-तरुणीव शापबलाद्वसुधां प्रपन्ना जनकनन्दिनी चिन्तामेवमकरोत् ।

नूनं विदितवृत्तान्ते
जटायुषि गतायुषि ।
मामिहस्थामार्यपुत्रः
किं नाधिगतवान्प्रभुः ॥ २२ ॥

आहोस्वित्क्रव्यादमायया विपर्यस्तप्रकृतेः काकुत्स्थस्य किमु अनास्था सञ्जायते अथवा,

न केवलं मामहरद्दुरात्मा
कृपां च रामस्य निसर्गसिद्धाम् ।
इदं न चेत्संश्रितवत्सलः किं
भवेत्स तूष्णीं जगदेकवीरः ॥ २३ ॥

इत्थं विलप्य रघुपुङ्गवमेव संततं चिन्तयन्ती कृच्छ्रान्मूर्छामगमत् ।

निशाचरीस्तां निरवद्यशीलां
निर्भत्सयन्तीर्निभृतं निवार्य ।
अस्वप्नलोकोत्सवमात्मदृष्टं
दुस्स्वप्नमेकं त्रिजटा जगाद ॥ २४ ॥

किं च,

उपन्नवृक्षस्य परोक्षभावा-
द्दुपेत्य पृथ्वीं सुचिरं लुठन्त्याः ।
नक्तंचरस्त्रीमुखकर्शितायाः
सीतालतायास्त्रिजटा जटाभूत् ॥ २५ ॥

तदनन्तरमात्मत्यागाय स्पृहयन्त्यां मैथिल्यां मारुतिरियमनुपेक्षणीया तपस्विनी नीतिमभुञ्चतीति चिन्तां परिगृह्य नेदीयानस्या बभूव । ततः —

देव्या दशाननवचोमयवज्रदीर्ण–
कर्णान्तरव्रणविरोपणभेषजानि ।
विस्रम्भणार्थमयमन्वयसङ्गतानि
रामाभिकीर्तनमधूनि शनैर्न्यषिञ्चत् ॥ २६ ॥

तदनन्तरं समन्तात्प्रसारितनयना जनकतनया तस्यां शाखायां शाखामृग मुद्वीक्ष्य दुस्स्वप्नबुद्ध्या चकितहृदया सलक्ष्मणाय रामाय भर्त्रे भद्रमाशंसमाना जन्मिमं दुरापस्वापं स्वप्नः कथमाप्नुयादिति विचिन्त्य मायया समायातनैर्ऋत इति बुद्ध्या तस्मान्मारुतपुत्रात् तत्रास । सोऽपि समवतीर्य वचनवैचित्र्याज्जनकपुत्रीं प्रत्याययितुमाञ्जनेयः कृताञ्जलिर्व्यजिज्ञपत् ।

कल्याणि त्वद्वियोगेन
तीव्रवेगेन ताम्यतः ।
राघवेन्द्रस्य दूतं मा-
मन्यथा मा स्म मन्यथाः ॥ २७ ॥

त्वया सह प्रस्थितचित्तवृत्तिः
विभावरीकोकसमानधर्मा
वचोऽब्रवीन्मैथिलि मन्मुखेन
त्वां कौशलं कोसलराजपुत्रः ॥ २८ ॥

अपि च,

शिरसा तव सौमित्रि-
रकरोदभिवादनम् ।
अपृच्छत्सोऽपि भद्रं त्वा-
मधिपश्च वनौकसाम् ॥ २९ ॥

एवमभिहितया तया सम्भूतविस्रम्भतया भयादर्द्रतया तावदनुयुक्तः पवनतनयो वालीमरणकारणं सुग्रीवस्य सख्यमाख्याय प्राचेतसचेत इव सततसन्निहितरामनाममङ्गलमङ्गुलीयकमस्यै प्रायच्छत् ।

सौख्यावहस्य पवनात्मजनीयमान-
रामाङ्गुलीयकविलोकनवासरस्य ।
सत्यं कलां शततमीं भुवि नैव भेजे
पाणिग्रहोत्सवदिनं जनकात्मजायाः ॥ ३० ॥

ततस्तं जानकी निस्सीमहर्षा बभाषे-"महाभाग, सर्वथास्य दुरात्मनः प्रत्यासीदति मृत्युः एवमनलाभिधानया विभीषणदुहित्रा स्वमात्रा प्रेषितया भणितम् । अयमप्यनार्यशीलः तुरीयमुपायमन्तरेण न मामार्यपुत्रस्य समर्पयिष्यति । नियतमहमपि मासादूर्ध्वं न शक्नुयां प्राणान्कृपणान्धारयितुम" इति । एतदाकर्ण्य मारुतिः—"महानुभावे मा भैषीः । भवन्तीं वहन्नेव तूर्णमुल्लङ्घितसागरो रघुवरचरणसरसिजसमीपमुपयास्यामि । मामसमर्थं न समर्थयेथाः" इत्यभिहितवान् ।

किं च,

महामहीध्रसध्रीचीं
सोऽयं वृद्धिमुपेयिवान् ।
यया नूनमपां राशिः
कुल्यातुल्यां दशां दधौ ॥ ३२ ॥

अथ तमुवाच सा जनकराजसुता मुदिता
किमु तव दुष्करं चरणलङ्घितवारिनिधेः ।
अपि तु मया सह प्लवगपुङ्गव यास्यसि चे
न्नियतमपायिनी परिणमेद्भवतः पदवी ॥ ३२ ॥

अन्यच्च,

पातिव्रत्यहुताशनेन यदि तं कुर्यामहं भस्मसात्
सत्यं दाशरथेश्शरस्य न भवेदात्मोचिता पारणा ।
किञ्चैतस्य यशोनिशापतिरपि प्रम्लानकान्तिर्भवेत्
तस्माच्छासितरावणे रघुपतौ यात्रा मम श्रेयसी ॥ ३३ ॥

एवं व्याहृतः पवनसुतो विनीतां सीतां पुनराबभाषे—

मायामृगेण तव मैथिलि वञ्चितायाः
शाखामृगेण पुनरागतिरित्ययुक्तम् ।
एषा कथापि भुवने वितता यदि स्या-
त्का नाम रामधनुषः प्रथिता प्रशस्तिः ॥ ३४ ॥

किं बहुना ! इत्येतदेवं चिन्तितम् । यदर्हं राघवगृहिण्याः तदेव निश्चितम् । यत्सदृशमीदृशस्य समाचारस्य तदेव प्रकाशितम् । यदनुगुणं रावणापराधप्रतिक्रियायास्तदेवानुमोदितम् । यदनुकूलं कुलवधूशीलस्य तदेव कथितम् । यदुचितं क्षत्रियाणीवाणीप्रक्रमस्य तदेवोपक्रान्तमिति बहुशः प्रशस्य सर्वथा रामलक्ष्मणौ लङ्कामिमां प्राप्ताविति जानकि, जानीहि । अनुजानीहीमं जनं प्रस्थातुम् । किंच काकुत्स्थेन विदितपूर्वमभिज्ञानं किमपि दीयतां इति । सा तु दीर्घं निश्वस्य निश्चित्य पुरा खलु चित्रकूटतटवने तरुणतरतरुरमणीयतया मन्दीभवन्नन्दनवैभवे रघुनन्दनेन उपधानीकृताङ्काया मम पयोधरपरिसरे खरतरनखराग्रविरचितविदारणं धाराधरनामानं काकं रघुपतिर्व्यलोकयत् ।

कुशरूपकुशेशयासनास्त्रं
विजहौ वासविवायसे स वीरः ।
अथ तत्कृपया हृताक्षिमात्र-
श्चिरजीवी स दधौ यथार्थसंज्ञाम् ॥ ३५ ॥

सैषा परिचितकथास्मरणात् द्विगुणितदुर्दशा केशविनद्धमपरमिदं अभिज्ञान-मुन्मुच्य,

चूडामणिं कपिवरस्य ददौ दशास्य-
सन्त्रासपुञ्जितरुषाग्निदशं कृशाङ्गी ।
आदाय तत्प्रणतिपूर्वमसौ प्रतस्थे
माणिक्यगर्भवदनोरगतुल्यबाहुः ॥ ३६ ॥

ततः कृतकृत्य एव निर्गत्य, निजागमनं निशाचरपतेः प्रकाशयितुमशोक-वनिकां बभञ्ज प्रभञ्जनात्मजः ।

स्वकृत्यैः शाखानामवनतिमतीव प्रकटयन्
अमार्गेण भ्राम्यन्परिकलितभङ्गः सुमनसाम् ।
द्विजानां सन्त्रासं श्रुतिमधुरवाचां विरचयन्
अयं लङ्कोद्याने दशवदनलीलामतनुत ॥ ३७ ॥

तदनु सरभसमारक्षिकरक्षोगणनिवेदितप्रमदवनकदनकुपितदशवदनप्रेषितान् पितृपति किङ्करभयङ्करान्किङ्करान्प्रहस्तपुत्रेण जम्बुमालिना सह निहत्य चैत्यतोरणद्वार-मुपगतवति हनुमति, पुनरपि निशमितामितनिशिचरगणमारणो रावणः सचिवान्पञ्च पञ्चाननपराक्रमान्प्रहसनप्रमुखान् बलीमुखं जीवग्राहं गृह्णीध्वमिति प्राहिणोत्। तत्र तानपि तोरणपरिघेण पञ्च पञ्चतां नीत्वा मुहुर्मुहुर्दाशरथिदूतोऽहमित्यात्मानमुद्घो-षयन्तं हनुमन्तं नियन्तुं नियन्ता निखिलरक्षसां अध्यक्षमक्षकुमारमध्यक्षिपत् ॥

अक्षःसङ्घट्टचूर्णीकृतकनकमहाभित्तिचैत्योत्थधूल्या
नक्षत्राणामकाले सरणिमरुणयन् वीरलक्ष्म्या समेतः ।

रक्षःशूरारुग्णशारान् क्षितितलफलके क्षेपणीयान् हनूमान्
अक्षक्रीडां विधातुं दशमुखनगरीचत्वरे तत्वरेऽसौ ॥ ३८ ॥

तत्क्षणं क्षणदाचराणां मिषतामेव निष्पादितरङ्ग निष्पेषकृत्यः चैत्यप्रासादमुत्पाटितस्तम्भजातजातवेदसा दग्ध्वा भूयोऽप्युपाश्रिततोरणः समीरणसुतो बभूव । एजमपि वृत्तान्तं श्रुत्वा कुपितस्य निशाचरपतेर्युगपदेव निपेतुः पुत्रे सुत्रामजिते समितिहेतोर्विंशतिहस्तयः ।

अनिमिषभुवने वा व्योम्नि वा भूतले वा
समरमुपगतं त्वां वीक्षितुं कस्समर्थः ।
इति नुतिवचनेन श्लाघयन्मेघनादं
प्लवगमिह नयेति प्राहिणोद्राक्षसेन्द्रः ॥ ३९ ॥

नेतुं शोकरसं निशाचरपतेर्हन्तुं चमूं रक्षसां
तस्यान्तःपुरयोषितां रचयितुं मानं विना रोदनम् ।
सूर्याचन्द्रमसोः प्रवेशविकलां लङ्कापुरीमग्निना
शुद्धां कर्तुमनुष्य वासवजिता जातो रणस्तोरणे ॥ ४० ॥

सङ्ग्रामदुर्दिने तस्मिन्
जहर्ष शरवर्षिणि ।
बर्हीव मेघनादेन
मेघनादेन मारुतिः ॥ ४१ ॥



तदनु यातुधानबलप्रधाननिधानक्रुद्धो विविधायुधवैतथ्यं विमृश्य विजयश्रीसञ्जतगन्धं गन्धवहनन्दनं शरनन्दास्त्रेण बबन्ध दशकन्धरात्मजः । तेन दिव्यास्त्रेण विवशशरीरमेनं पिशिताशनाः शणवरकलैर्बबन्धुः ।

स मारुतेर्नैर्ऋतपाशजन्मा
बन्धोऽभवद्बन्धनमोक्षहेतुः ।

पुरा पुलस्त्यान्वयपांसनेन
बन्दीकृतानां सुरसुन्दरीणाम् ॥ ४२ ॥

तदनन्तरमितरहननासहतया निह्नुतस्य दिव्यास्त्रस्य प्रभावं विभावयन्विभावरीचरपतितनुजः पवनतनयं निजपितृसमीपमुपनिनाय ।

सोऽयं ददर्श दशकन्धरमन्धकारि-
लीलाद्रितोलनपरीक्षितबाहुवीर्यम् ।
बन्दीकृतेन्द्रपुरवारवधूकराग्र-
व्याधूतचामर मरुच्चलितोत्तरीयम् ॥ ४३ ॥

आपाटलाधरपुटान्तविराजमान-
दंष्ट्रामहः प्रसर शारशरीरकान्तिम् ।
सन्ध्याम्बुदान्तरितमध्यसुधामयूख-
रेखाभिराममिव वासवनीलशैलम् ॥ ४४ ॥

सङ्ग्रामकेलि परिघट्टन भग्नमग्न-
दिग्दन्तिदन्तकृतमुद्रभुजान्तरालम् ।
छायात्मना प्रतितरङ्गविराजमान-
शीतांशुमण्डलसनाथमिवाम्बुराशिम् ॥ ४५ ॥

निश्श्रेयसप्रणयिनीं पदवीं निरोद्धुं
त्रैलोक्यपापपरिपाकमिवात्तरूपम् ।
सूर्येन्दुपावकमहांसि तपोबलेन
जित्वा यथेच्छमभिषिक्तमिवान्धकारम् ॥ ४६ ॥

सोऽपि प्लवङ्गमभिवीक्ष्य समीरपुत्रं
चित्रीयमाणहृदयः पिशिताशनेन्द्रः ।

कैलासशैलचलनागसि शापदायी
नन्दीश्वरः स्वयमुपागत इत्यमंस्त ॥ ४७ ॥

ततः प्रहस्तेन विहितविविधानुयोगः प्रत्यभाषत रावणं मारुतिः—"अयमहम् अह्लांपतिकुलतिलकस्य सत्यसन्धस्य पितृनियोगसमुपगतवनवासनिरतस्य शूर्पकारातिबाधितशूर्पणखाप्राप्तवैरूप्य कुप्यत्खरप्रमुखनिशिचरबलपलालजालकल्पान्तानलकल्पशिलीमुखस्य कपटहरिणहननसमयपरिमुषितदारान्वेषणसञ्जातसुग्रीवसख्यस्य समुत्खाततवालिकण्टकस्य दुर्वृत्तक्षत्रवंशवनपवनसारथेस्तपोनिधेर्जामदग्न्यस्य भुजबलावलेपलोपहेतोः श्रीमतो दाशरथेर्दूतोऽहं ; सीतामार्गमार्गणाय दिशि दिशि तपनतनयप्रेषितानां वानराणामेकतमः समुद्रलङ्घनजङ्घालः तव नगर प्रमदवनसीमनि रघुवरधर्मदारान्प्रणम्य प्रतिष्ठासुर्मदीयमागमनं प्रकाशयितुं प्रमथिताशोकवनिकानोकहनिवहस्त्वद्दर्शनकुतूहलेन केवलमनुभूतं ऋतलङ्कातान्तु सन्नहनस्तव परिसरमुपासरम् ।

आनाकलोक परिकीर्तित सच्चरित्र-
मत्रोपरुध्य रघुवंशपतेः कलत्रम् ।
वंतानवेदिजनितं पवमानबन्धुं
वस्त्रेण बद्धुमविनीत कथं यतेथाः ॥ ४८ ॥

किं च,

प्रेंखन्ती पिशिताशया रणमुखे सौमित्रिपत्रिक्षतं
त्वद्गात्रं परितः पतत्रिपरिषच्छत्रच्छवि मागमत् ।
द्राक्पौलस्त्य पुलस्त्यवंशविलये सम्भाविते त्वत्कृते
कान्तानां नयनाम्बवान्तसलिलं मा भून्निवापोदकम् ॥ ४९ ॥

बद्धादरोऽपि परदारपरिग्रहे त्व-
मिक्ष्वाकुनायककलत्रमनार्य मा गाः ।
वाताशनोऽहमिति किं विनतासुतस्य
श्वासानिलाय भुजगः स्पृहयालुतालुः ॥ ५० ॥

बाहुचन्दन निषङ्गकोटरा-
दुद्धृतो रघुपतेश्शरोरगः ।
प्राणवायुमविनीत तावकं
कालयापनमपास्य पास्यति ॥ ५१ ॥

किं च,

मायामृगे समरनाटकसूत्रधारे
शाखामृगे च भवतः प्रतिकूलवाले ।
दृष्टोद्यमस्य रघुनायकसायकस्य
मुक्त्वा प्रणामकवचं कवचं किमन्यत् ॥ ५२ ॥

एवं निशम्य कुपितः पिशिताशनेन्द्रः
प्राणानमुष्य हरतेति भटानवादीत् ।
आजन्मशुद्धमतिरत्र विभीषणस्तं
दूतो न बध्य इति शास्त्रगिरा रुरोध ॥ ५३ ॥

रावणोऽपि विभीषणभाषणमङ्गीकृत्य प्लवङ्गानामङ्गेषु लाङ्गूलमेव वरं, तदेव कार्पासवाससा संवीतं बहिसात्कृत्य चत्वरे चत्वरे घोषानुद्घोष्य सप्रहारं नगरं परितः सञ्चारयत इति राक्षसानादिदेश । तेषु तथा कुर्वाणेषु—

निर्णयाविषयमस्य बालतः
कर्णिकार निकुरुम्बकर्बुरः ।
निर्निमेषगणभाग्यसञ्चया-
दुन्मिमेष भगवानुषर्बुधः ॥ ५४ ॥

एतद्वृत्तान्तमारक्षिकराक्षसीगणगर्वोदीर्णवर्णितमाकर्ण्य दूयमानमानसा जानकी हुताशनमुपस्थाय शीतो भव हनुमत' इति प्राञ्जलिः प्रार्थयत ।

घोरस्य राघवकलत्रतपोमयाग्नेः
मा भूवमिन्धनमहं क्षणमित्यवेत्य ।
शैत्यं वितत्य दहनः पवमानसूनोः
वालाग्रसीम्नि मणिदीप इवावतस्थे ॥ ५५ ॥

तदनु पवनतनयोऽपि ' पुरमिदं न खलु सुव्यक्तं नक्तमालोकयम् । तस्मादनलसाक्षिकमेव पुरमखिलमालोकयामि '' इति यामिनीचरगणं परिचिततोरणपरिघेण जघान ।

सीताभिधानकमलां प्रभवे प्रदातुं
लङ्कार्णवं क्षुभितसैन्यतरङ्गभीमम् ।
वेधा ममन्थ किल रज्जुभुजङ्गराज-
भोगावृतेन पवनात्मज मन्दरेण ॥ ५६ ॥

अथ दह्यमानायां लङ्कायाम्—

रक्षःस्त्रीवदनारविन्दरजनीं विश्वम्भराबर्हिणी-
वर्षारम्भदशां दशाननयशःकादम्बकादम्बिनीम् ।
वैधव्योचितवेषनिश्चितमनोलङ्कावधूटीजटां
वैदेह्यास्त्रिजटासमां समकिरद्धूम्यां हनूमान् दिवि ॥ ५७ ॥

एतद्विक्रमवीक्षणेन जनितामानन्दबाष्पोद्गतिं
रक्षोनाथभयात्पिधातुमनसां विद्याधराणां तदा ।
व्याजव्याहृतये यथा परिणमेद्धूम्या तथोज्जृम्भते
स्वर्लोकेऽपि कलिन्दशैलतनया कल्लोलशङ्कावहा ॥ ५८ ॥

आदौ नीलांशुकश्रीस्तदनु मरकताबद्धनीवीविभूतिः
कस्तूरीपङ्कभङ्गी क्षणमपि विकचेन्दीवरस्रक्सपत्नी ।

पश्चात् स्निग्धाञ्जनाभा जघनकुचकटीकण्ठनेत्रेषु जाता
दिक्कान्तानां तदानि दशमुखनगरीदाहसम्भूतधूम्या ॥ ५९ ॥

हा तात हा जननी हा सुत हा सहाय
हा पौत्र हा प्रियसखि क्व नु हा हतोऽस्मि ।
इत्यादि पौरपरिदेवनभारवाग्भि-
रापूरि रावणपुरी शिखिना परीता ॥ ६० ॥

यैर्वृन्दारकसुन्दरीजनमुखे नीराजनं निर्मितं
निर्मेघे गगनेऽपि यैर्विरचिता सौदामिनीसंहतिः ।
ते द्वित्राण्यपि वासराणि न गता निर्वाणमौर्वानल-
ज्वालाडम्बरमम्बुधौ विदधिरे वालानलोद्यत्कणाः ॥ ६१ ॥

आदीप्यमानपवनात्मजवालसङ्गा-
दङ्गारशेषविभवामवलोक्य लङ्काम् ।
व्योम्नि स्थिता निशिचराः स्वगृहाणि नूनं
निर्वापयन्त इव नेत्रभवैः पयोभिः ॥ ६२ ॥

चक्रे शक्रजिदाज्ञया रणमुखे यत्कर्म रक्षोगणः
तत्कर्तुं क्षणदाचरक्षितिभुजा युक्तोऽप्यशक्तोऽभवत् ।
सप्तार्चिश्च हनुमता परिचितो लङ्कामधाक्षीद्यथा
तत्पित्रा मरुता युतोऽपि न तथा दाहक्रियायां पटुः ॥ ६३ ॥

तस्मिन् हनूमदरणिप्रभवे हुताशे
शुद्धिं विधाय पतिमेव समेतुमैच्छत् ।
लङ्केश्वरेण रणकेलिकुतूहलेन
बाहोर्बलादपहृता सुरराजलक्ष्मीः ॥ ६४ ॥

वाचामिदानीं किमु विस्तरेण
लङ्कापुरीं रावणबाहुगुप्ताम् ।
काकुत्स्थदूतोऽयमुपेत्य चक्रे
कृतान्तदूतस्य सुखप्रवेशाम् ॥ ६५ ॥

पौलस्त्यपातकिसमागमजायमान-
मेनः पुनान इव वानरयायजूकः ।
निर्वर्तिताक्षविजयो निजबालवह्नौ
हुत्वा पलाशसमिधः सुगतिर्बभूव ॥ ६६ ॥

लङ्कादाहेऽप्यनार्तां रघुपतिदयितां चारणोक्त्या विदित्वा
सानन्दस्तां प्रणम्य प्रतिगमनविधौ प्राप्य तस्य नियोगम् ।
आरुह्यारिष्टशैलं निधिमपि पयसां स्वैरमुत्तीर्य वेगात्
चक्रे गत्वा महेन्द्रं प्लवगकुलपतीन्पूर्णकामान् हनूमान् ॥ ६७ ॥

अथ यथार्हं सैन्याधिपान् सम्मान्य मारुतिस्तैरनुयुक्तः स्ववृत्तान्तमखिलमाख्यातवान् । तदनु पवनतनयवचनमुदिता वानरवरूथिनी यूथनाथानुयाता तद्दर्शनजनितमानन्दं दाशरथौ सुग्रीवे च संविभज्येव विवक्षितुमहमहमिकया धावन्ती मध्येसरणि दधिमुखरक्षावनं मधुवनं हनूमदनुमत्याभिभूय मधुपानसुखमनुबभूव ।

अथाब्रवीत् गिरिवरतुङ्गमङ्गदं
कृताञ्जलिर्दधिमुख एव रोषवान् ।
वलीमुखान् मधुभजने शिलीमुखान्
भवानिमान् झटिति निवारयेदिति ॥ ६८ ॥

अयमप्येनमवोचत् —

दशमुखपुरमध्ये वीक्षिता मैथिलीति
श्रवणमधु वितीर्णं येन वीरेण मह्यम् ।

दधिमुख यदि सोऽयं भाषते को निरुन्ध्यात्
मधु पिबतु यथेच्छं वाहिनी वानराणाम् ॥ ६९ ॥

तदनु भयवशसमुपगतदधिमुखवचनविदितमधुवनकदनपरिगणितजनकदुहितृदर्शनजनितप्रमदभरभरितस्तपनतनयस्तत्र तनुविकृतिमतनुत दधिमुखागमननिमित्त सम्पत्तिम् ।

आरुह्याद्रिमथावरुह्य विपिनान्यासाद्य नानाफला-
न्यास्वाद्य प्लुतमारचय्य वदनैरापाद्य वाद्यक्रमान् ।
आलिंग्य द्रुममक्रमं मदवशादाधूय पुच्छच्छटा-
मारादाविरभूदहंप्रथमिका पीना कपीनां चमूः ॥ ७० ॥

निद्राक्षयादरुणितेन समीरपुत्रः
सौमित्रिनेत्रयुगलेन निपीयमानः ।
चूडामणिं करतले कलयन्ववन्दे
पादारविन्दयुगलं भरताग्रजस्य ॥ ७१ ॥

अक्लेशसम्भूनगतागताभ्यां
निस्तीर्णविस्तीर्णमहार्णवोऽपि ।
आनन्दसिन्धौ पृतनासमक्ष-
मक्षस्य हन्ता नितरां ममज्ज ॥ ७२ ॥

आनीतचूडामणिसन्निधानात्
आविःप्रमोदेन रघूद्वहेन ।
तत्रानुयुक्तः पवमानजन्मा
विज्ञापयामास कृतप्रणामः ॥ ७३ ॥

लङ्कापुरोपवनसीम्न्यथ राजपुत्रीं
आलोक्य निशिचरीगणबाध्यमानाम् ।

केनापि पातकवशेन सुपर्णलोके
बन्दीकृतामिव भुजङ्गमराजकन्याम् ॥ ७४ ॥

देव्यास्त्वदीयान्वयकीर्तनेन
त्वन्मुद्रया च व्यपनीय शोकम् ।
वार्तामभिज्ञानमयीमयाचं
प्रस्थातुकामः परिपूर्णकामः ॥ ७५ ॥

ब्रह्मास्त्रवित्रस्तजयन्तकृत्यां
कथामभिज्ञाप्य वने प्रवृत्ताम् ।
चिरं रुदन्त्या जनकेन्द्रपुत्र्या
चूडामणिः प्रेषित एष तुभ्यम् ॥ ७६ ॥

किं बहुना—

देव तस्याः प्रतिष्ठासू-
नसूनाशैकपालितान् ।
मुद्रयित्वा प्रपन्नोऽहं
त्वदाभिज्ञानमुद्रया ॥ ७७ ॥

इति श्री विदर्भराज विरचिते
चम्पूरामायणे सुन्दरकाण्डः समाप्तः

ಟಿಪ್ಪಣಿ ಇತ್ಯಾದಿ

1 चारणानां पथि—ದೇವಮಾರ್ಗದಲ್ಲಿ
प्रथमानःवेगः यस्यः सः = प्रथमानवेगः
खे गच्छन्तीति खगाः तेषां इन्द्रः तस्य वेगः यस्य सः
उदस्थात् = ಮೇಲೆದ್ದನು. उद् + स्था - लुङ्.

गद्य—उदन्वान् = ಸಮುದ್ರ. 'उदन्वानुदधिःसिन्धुः इत्यमरः । क्ष्माभृत्= ಪರ್ವತ पारिप्लवः = ಚಂಚಲ धम्मिल्लः = ಕೇಶಪಾಶ श्वयथुः = ಬೊಬ್ಬೆ(ಕ್ಕೆ) साध्वसम् = ಭಯ कण्ठीरवः = ಸಿಂಹ कन्दर = ಗುಹೆ निबिरीसम् = ನಿಬಿಡ सरीसृपः = ಹಾವು. अन्त्राः = ನರಗಳು कीचकः = ಕಿರಬಿದುರು.

2 क्षोणीरुहः = ಮರ. ततिः = ಸಾಲು. मध्येवारिधि—वारिधेःमध्ये 'पारे मध्ये षष्ठ्या वा'' इति अव्ययीभावः ।

शङ्कुः = ಗೂಟ. स्थाणुरस्त्री ध्रुवः शङ्कुः' इत्यमरः ।

3 पक्षः = ರೆಕ್ಕೆ. रेचिताः = निरस्ताः पाथोनिधेः = ಸಮುದ್ರದ.

गद्य—प्रत्यूहः = ವಿಘ್ನ 'विघ्नोन्तरायःप्रत्यूहः' इत्यमरः हिरण्यनाभः=ಮೈನಾಕ (ಚಿನ್ನವನ್ನೇ ಪ್ರಧಾನವಾಗಿ ಉಳ್ಳವನು). ''नाभिः प्रधाने'' इति विश्वः ।

5 पर्वतभेदी = ಇಂದ್ರ. विपक्षः = ರೆಕ್ಕೆ ಇಲ್ಲದವನು, ಶತ್ರುಗಳ ಕಡೆಯವನು. सपक्षः = ರೆಕ್ಕೆಯುಳ್ಳವನು, ಮಿತ್ರ ಪಕ್ಷನು.

6 बलमानं = ವದ್ದಾಡುತ್ತಿದ್ದ बल-मान-माथि-वज्रः ಬಲಾಸುರನ ಗರ್ವವನ್ನು ದಮನ ಮಾಡಿದ ವಜ್ರಾಯುಧವು वबयोरभेद ವೆಂಬುದನ್ನು ಗಮನಿಸಿ ಅರ್ಥ ಹೇಳಬೇಕು. मन्युः = ಯಜ್ಞ, ಕೋಪ पवमानात्मजः = ಮಾರುತಿ.

गद्य—अरुणत् = ತಡೆದನು अरुणसारथेः = ಸೂರ್ಯನ पदवी = ಮಾರ್ಗ. व्यादाय = ತೆರೆದುಕೊಂಡು द्विरसनजननी = ಸರ್ಪಮಾತಾ.

7 उज्जृम्भितस्य = ವೃದ್ಧಿಗೊಂಡಿರುವ उत्तमाङ्गम् = ತಲೆ गगनस्रवन्ती = ಗಂಗೆ.

9 खराग्रैः = ಚೂಪಾದ ತುದಿಯುಳ್ಳ नखैः = ಉಗುರುಗಳಿಂದ नृसिंहस्य रंह इव रंहः यस्य सः । रंहः = ವೇಗ.

गद्य—पारावारः = ಸಮುದ್ರ प्रतनुतरः = ಅತ್ಯಂತ ಸೂಕ್ಷ್ಮವಾದ. नितान्तं= ಬಹಳ अन्तरायः = ಅಡ್ಡಿ यातुधानाः = ರಾಕ್ಷಸರು अवगन्तुमिच्छुः

अवजिगामिषुः = ತಿಳಿಯಲಿಚ್ಛೆಯುಳ್ಳವನಾದ गभस्तिमालिनः = ಸೂರ್ಯನ
शतमखस्य = ಇಂದ್ರನ प्रचेतसे = ವರುಣನಿಗೆ प्रविशति भगवति भास्वति= ಭಗವಾನ್ ಸೂರ್ಯನು ಪ್ರವೇಶಿಸುತ್ತಿರಲು ಇಲ್ಲಿ "यस्य च भावेन भावलक्षणम्" ಎಂಬ ಅನುಶಾಸನದಿಂದ ಸತಿಸಪ್ತಮಿ.

पतङ्गः = ಸೂರ್ಯ तारापथतरङ्गिणी = ಗಂಗೆ कपाट = ಬಾಗಿಲು पिधानं= ಮುಚ್ಚುವುದು. कुमुदभवने कुमुदभवने प्रतिकुमुदभवनम् = अव्ययीभावः। मधुव्रतः = ದುಂಬಿ प्रेङ्खिते = ಉಂಟಾಗುತ್ತಿರಲು रथांगविहगाः = ಚಕ್ರವಾಕ ಗಳು मतङ्गजः = ಗಜ. 27 ನಕ್ಷತ್ರಗಳೆಂಬ ಹಾರದಿಂದ ಆಕಾಶವೆಂಬ ಗಜವು ಅಲಂಕರಿಸಲ್ಪಟ್ಟಿರಲು

"सैव नक्षत्रमालास्यात् सप्तविंशति मौक्तिकैः"

10 शृङ्गाररसजीवितम् = ಶೃಂಗಾರ ರಸಕ್ಕೆ ಉಜ್ಜೀವಕ
शशलांछनः = ಚಂದ್ರ.

11 गगनाजिरे = ಗಗನಾಂಗಣದಲ್ಲಿ रेजिरे = ಪ್ರಕಾಶಿಸಿದುವು. शैवाल = ಪಾಚಿ.
बिसाङ्कुराः = ತಾವರೆಯ ಚಿಗುರುಗಳು.

12 कीर्तिच्छटाजवनिकाम्=ಕೀರ್ತಿ ಸಮೂಹವೆಂಬ ಪರದೆಯನ್ನು अपनीय = ತೆಗೆದು
सुमनसाः = ದೇವತೆಗಳು.

गद्य—विग्रहः = ಯುದ್ಧ, ಶರೀರ अर्गलीभूय = ಅಗುಳಿಯಾಗಿ अवज्ञा = ತಿರಸ್ಕಾರ उपज्ञा = ಮೊದಲ ತಿಳುವಳಿಕೆ.

'उपज्ञा ज्ञानमाद्यं स्यात्' इत्यमरः।

विचिन्वन् = ಹುಡುಕುತ್ತಾ.

14 दीप इवाचरितम् दीपायितम् ಇಲ್ಲಿ ಆಚಾರಾರ್ಥದಲ್ಲಿ क्यङ् ಬಂದು क्त ಪ್ರತ್ಯಯವು ಬಂದಿದೆ.

गद्य— अस्वप्नसुन्दरी = ದೇವತಾ ಸ್ತ್ರೀ संवेशः = ನಿದ್ರೆ.

'स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि' इत्यमरः।'

अवरोधः = ಅಂತಃಪುರ  वेशयुवतिः = ವೇಶ್ಯಾಸ್ತ್ರೀ.

15 त्रयी = ಮೂರು ವೇದಗಳು

निर्ममः = निःस्पृहः । शम एव धनं यस्य सः शमधनः

16 नभस्वतः = ವಾಯುವಿನ  न्यग्रोधः = ಆಲ.

17 मल्ली = ಮಲ್ಲಿಗೆ  स्नुहिवने = ಸೀಹುಂಡಿ (ಕಳ್ಳಿ) ವನದಲ್ಲಿ

गद्य — वैकक्षकमाला = उरसि तिर्यक् प्रसारितपुष्पमला ।

19 बारसीमन्तिनी = ವೇಶ್ಯಾ  मार्जनी = ಗುಡಿಸುವ ಪರಕೆ  अवजगाहे = ಪ್ರವೇಶಿಸಿತು.

20 हता नीतिः यस्य सः हतनीतिः (ರಾವಣ)  सल्लकी = वृक्षविशेषः ಆನೆಗೆ ಪ್ರಿಯವಾದುದು.

वैतानपावकशिखामिव = ಯಜ್ಞಾಗ್ನಿಜ್ವಾಲೆಯನ್ನೋ ಎಂಬಂತೆ.

गद्य — कुत्सितः पुरुषः-कापुरुषः ಹೇಡಿ  हृदयदयितः = ಪ್ರಾಣವಲ್ಲಭ,

अपत्रपा = ನಾಚಿಕೆ  प्रभञ्जनः = ವಾಯು  कण्ठे उपकण्ठम् = ಶಿರದ ಪ್ರಾಂತದಲ್ಲಿ.

अजय्या — "क्षय्य जय्यौ शक्यार्थे" ಎಂಬ ಸೂತ್ರದಿಂದ ನಿಪಾತಮಾಡಿರುವುದರಿಂದ ಸಾಧು.

सान्द्रवसापङ्किलम् = ಅಧಿಕವಾದ ಕೊಬ್ಬಿನಿಂದ ಕೆಸರಾದ  शिलीमुखः = ಬಾಣ

अवग्रह = ಪ್ರತಿಬಂಧಕ

सौमित्रिपत्रिचातकानाम् = ಲಕ್ಷ್ಮಣನ ಬಾಣ ಎಂಬ ಚಾತಕಕ್ಕೆ  शोणितम् = ರಕ್ತ.

21 पञ्चानां बाणानां समाहारः पञ्चबाणी तया विभिन्नम्.ಕಾಮಪೀಡಿತ.

हृतविषाधेः = ವಿಷಹರಣ ಶಕ್ತಿಯುಳ್ಳ.  विष + आधि तस्य

गद्य— आरक्षिक राक्षसीः = ಕಾಯುತ್ತಿದ್ದ ರಾಕ್ಷಸಿಯನ್ನು

निशान्तः = ಬೆಳಗಿನ ಝಾವ, ಅಂತಃಪುರ.

क्षणदाचरीणाम् = ರಾಕ್ಷಸಿಯರ. आहोस्वित् = ಅಥವಾ

विपर्यस्था प्रकृतिः यस्य सः तस्य । अनास्था = ಅನಾದರ.

23 निसर्ग सिद्धाम् = ಸ್ವಾಭಾವಿಕವಾದ. संश्रितवत्सलः = ಆಶ್ರಿತ ವತ್ಸಲನಾದ.

24 निरवद्यम् शीलं यस्याः सा ನಿರ್ದುಷ್ಟವಾದ ಚಾರಿತ್ರ್ಯವುಳ್ಳ.

अस्वप्नलोकोत्सवम् = ದೇವತೆಗಳಿಗೆ ಹರ್ಷದಾಯಕವಾದ

25 उपपन्नवृक्षः = ಹತ್ತಿರದ ಆಶ್ರಯವಾದ ಮರ.

ಸೀತೆಯೇ ಬಳ್ಳಿ. ರಾಮನೇ ಆಶ್ರಯವಾದ ಮರ. ಅಂತಹ ರಾಮನ ಅಗಲಿಕೆಯಿಂದ ಬಳಲಿ, ರಾಕ್ಷಸಿಯರ ಬೆದರಿಕೆಗಳಿಂದ ಬಹುವಾಗಿ ಸಂಕಟಗೊಂಡು ನೆಲದ ಮೇಲೆ ಒದ್ದಾಡುತ್ತಿದ್ದ ಸೀತಾಲತೆಗೆ ತ್ರಿಜಟೆಯೆಂಬ ರಕ್ಕಸಿಯೇ ಮೇಲೇಳಲು ಆಲಂಬನವಾದ ಬಿಳಿಲಾದಳು.

जटा = ಜಟೆ, ಬಿಳಿಲು. ಇಲ್ಲಿ ರೂಪಕಾಲಂಕಾರ.

गद्य— नेदीयान् = ಸಮೀಪವರ್ತಿ. शाखामृगम् = ವಾನರನನ್ನು

तत्रास = ಹೆದರಿದಳು प्रत्याययितुम् = ನಂಬಿಸಲು.

28 कोकः = ಚಕ್ರವಾಕ. विभावरी = ರಾತ್ರಿ

प्रस्थिता प्रयाता चित्तवृत्तिः यस्य सः ।

29 वनौकसाम् = ವಾನರರ.

"मर्कटो वानरः कीशो वनौकाः" इत्यमरः

गद्य— विस्रम्भः = ವಿಶ್ವಾಸ. प्राचेतसश्चेत इव = ವಾಲ್ಮೀಕಿಗಳ ಮನಸ್ಸಿನಂತೆ

अङ्गुलीयकम् = ಉಂಗುರವನ್ನು शततमीम् कलाम् = ನೂರರಲ್ಲಿ ಒಂದು ಅಂಶ

ನನ್ನು     निःसीमहर्षा = ಎಲ್ಲೆ ಮೀರಿದ ಸಂತೋಷವುಳ್ಳವಳು (ಆನಂದ ಪರವಶಳು)

प्रत्यासीदति = ಸಮೀಪಿಸುತ್ತದೆ.

मा भैषीः "न माङ् योगे" ಎಂಬ ಸೂತ್ರದಿಂದ ಅಡಾಗಮವು ಬಂದಿಲ್ಲ.

31 महीध्रः = ಬೆಟ್ಟ     महीध्रस्य सध्रीची, महीध्रसध्रीची = ಬೆಟ್ಟಕ್ಕೆ ಸಮಾನವಾದ

कुल्या = ಕಾಲುವೆ.

33 पातिव्रत्यमेव हुताशनः तेन = ಪಾತಿವ್ರತ್ಯವೆಂಬ ಅಗ್ನಿಯಿಂದ.

आत्मोचिता पारणा = ತನಗೆ ಅನುರೂಪವಾದ ತೃಪ್ತಿ.

यश एव निशापतिः = यशोनिशापतिः ಕೀರ್ತಿಯೆಂಬ ಚಂದ್ರ.

34 मायामृगेण = ಮಾಯಾಜಿಂಕೆಯಿಂದ   शाखामृगेण = ವಾನರನಿಂದ.

ಈ ಎರಡು ಶಬ್ದಗಳ ಚಮತ್ಕಾರವನ್ನು ಗಮನಿಸಬೇಕು.

35 कुश = ದರ್ಭೆ     कुशेशयासनास्त्रम् = ಬ್ರಹ್ಮಾಸ್ತ್ರ

वासवस्यापत्यं पुमान् वासविः वासविश्चासौ वायसश्च-वासविवायसः

(काकासुरः)

विजहौ = ಬಿಟ್ಟನು

गद्य— केशपिनद्धम् = ಕೇಶದಿಂದ ಮುಚ್ಚಿದ್ದ.

अभिज्ञानम् = ಗುರುತನ್ನು.

36 दशास्यसंत्रास्तपुंजितरुषाग्निदशाम् = ರಾವಣನ ಭೀತಿಯಿಂದ ಪೀಡಿತವಾದ (ಹುದು
ಗಿದ್ದ) ಕೋಪಾಗ್ನಿಯಂತಿದ್ದ

गद्य— प्रबभञ्ज = ಮುರಿದನು     प्रभञ्जनात्मजः = ಮಾರುತಿ.

37 शाखानाम् = ಕೊಂಬೆಗಳ,   ವೇದಶಾಖೆಗಳ

अवनतिम् = ಮುರಿಯುವಿಕೆಯನ್ನು,   ನಶಿಸುವಿಕೆಯನ್ನು

सुमनसाम् = ಹೂಗಳ,   ದೇವತೆಗಳ.

द्विजानाम् = ಹಕ್ಕಿಗಳ. ಬ್ರಾಹ್ಮಣರ.
श्रुतिः = ಕಿವಿ. ವೇದ.
ಇಲ್ಲಿ ಶ್ಲೇಷಾಲಂಕಾರವಿದೆ.

गद्य— पितृपतिः = ಯಮ. निशमितं = ಕೇಳಿದ, ತಿಳಿಸಲ್ಪಟ್ಟ
बलीमुखम् = ವಾನರನನ್ನು जीवग्राहम् = ಜೀವ ಸಹಿತವಾಗಿ
अध्यक्षम् = ಕಣ್ಣೆದುರಿಗಿದ್ದ अभ्यक्षिपत् = ಕಳುಹಿಸಿದನು.

38 धूम्या = ಹೊಗೆಯ ಸಮೂಹ. शारान् = ಪಗಡೆಕಾಯಿಗಳನ್ನು
चत्वरे = ಅಂಗಳದಲ್ಲಿ तत्वरे = ಆತುರಪಟ್ಟನು
गद्य — मिषतामेव = ನೋಡುತ್ತಿರುವಾಗಲೇ निष्पेषकृत्य = ತೀಡುವುದು.
सुत्रामजिति = ಇಂದ್ರಜಿತುವಿನ ಮೇಲೆ समिति = ಯುದ್ಧ.

39 न म्रियन्ते निमेषाणि येषां ते अनिमिषाः = ದೇವತೆಗಳು.

40 चमूम् = ಸೇನೆಯನ್ನು मानं विना = ಎಲ್ಲೆ ಮೀರಿದ.

41 दुर्दिनम् = ಮೋಡ ಮುಚ್ಚಿದ ದಿನ. बर्हीं = ನವಿಲು मेघनादेन = ಮೋಡದ ಗರ್ಜನೆಯಿಂದ, ಇಂದ್ರಜಿತುವಿನಿಂದ

गद्य— विजयश्रीसंगतगन्धम् = ಜಯವುಂಟಾಗುತ್ತಿರುವುದರಿಂದುಂಟಾದ ಗರ್ವವುಳ್ಳ,
सदानन्दास्त्रेण = ಬ್ರಹ್ಮಾಸ್ತ್ರದಿಂದ दशकन्धरात्मजः = ಇಂದ್ರಜಿತು
पिशिताशनाः = ರಾಕ್ಷಸರು.

42 पुलस्त्यान्वयपांसनेन = ಬ್ರಹ್ಮನ ಕುಲವನ್ನೇ ದೂಷಿಸಿದವನಿಂದ.
गद्य—निह्नुतस्य = ತಿರಸ್ಕರಿಸಲ್ಪಟ್ಟ विभावयन् = ಆಲೋಚಿಸುತ್ತಾ,
विभावरीचरपतितनुजः = ಇಂದ್ರಜಿತು.

43 अन्धकारिः = ಶಿವನು इन्द्रपुरवारवधूः = ಅಪ್ಸರಸ್ತ್ರೀ व्याधूत = ಬೀಸಲ್ಪಟ್ಟ.

46 नैश्रेयसस्य प्रणयिनीम् = ಮೋಕ್ಷ ಪ್ರಾಪಕವಾದ. पदवीं = ಮಾರ್ಗವನ್ನು

47 प्लवङ्गम् = वानरम् । अभिवीक्ष्य = ನೋಡಿ चित्रीयमाणं हृदयं यस्य सः चित्रीयमाणहृदयः । पिशिताशनानां – रक्षसां इन्द्रः = ರಾವಣನು ಮಾರುತಿಯನ್ನು ನೋಡಿ ಹಿಂದೆ ತಾನು ಕೈಲಾಸ ಪರ್ವತವನ್ನು ಎತ್ತಿದಾಗ ಸಂಭವಿಸಿದ ಅಪರಾಧಕ್ಕೆ ಶಾಪಕೊಟ್ಟ ನಂದಿಕೇಶ್ವರನೇ ಬಂದಿದ್ದಾನೆಂದು ಭಾವಿಸಿದನು.

गद्य —अनुयोगः = ಪ್ರಶ್ನೆ शूर्पकारातिः = ಮನ್ಮಥ पलाल = ಹೊಟ್ಟು मार्गणाय = ಹುಡುಕಲು जंघालः = ಅತಿವೇಗ अनोकहनिवहः = ಮರಗಳ ಗುಂಪು.

अनुभूतनैर्ऋतलूतातन्तु संनहनः = ರಾಕ್ಷಸರೆಂಬ ನೇಗೆಯುವರ ದಾರಗಳಿಂದ ಕಟ್ಟಲ್ಪಟ್ಟವನಾಗಿ, ಜೇಡದ ದಾರದಿಂದ ಬಂಧಿತನಾಗಿ.

परिसरम् = ಹತ್ತಿರಕ್ಕೆ.

49 प्रेङ्खन्ती = ಹಾರಾಡುತ್ತಿರುವ पतत्रिपरिषच्छत्रच्छविम् = ಹಕ್ಕಿಗಳ ಗುಂಪೆಂಬ ಛತ್ರಿಯ ಕಾಂತಿಯನ್ನು. निवापोदकम् = ತರ್ಪಣದ ಜಲ.

50 वाताशनः = ಸರ್ಪ. विनतासुतस्य = ಗರುಡನ स्पृहयालुतालुः = ಆಸೆ ಪಡುವವನು.

स्पृहिगृहि ........ ಈ ಸೂತ್ರದಿಂದ आलुच् ಪ್ರತ್ಯಯವು ಬಂದಿದೆ.

51 निषङ्ग = ಬತ್ತಳಿಕೆ.

ಎಲೈ ಅವಿವೇಕಿ ರಾವಣನೇ, ರಾಮನ ತೋಳೇ ಶ್ರೀಗಂಧದಮರ. ಬತ್ತಳಿಕೆಯೇ ಅದರ ಪೊಟರೆ. ಬಾಣವೇ ಹಾವು. ಅದು ತಡಮಾಡದೆ ನಿನ್ನ ಪ್ರಾಣವನ್ನು ಹೀರುವುದು. ಇಲ್ಲಿ ರೂಪಕಾಲಂಕಾರ.

54 कर्णिकारनिकुरुम्बकर्बुरः = ಕರ್ಣಿಕಾರ ಪುಷ್ಪಗಳ ಗೊಂಚಲಿನಂತೆ ಬೂದು ಬಣ್ಣದಿಂದ ಕೂಡಿದ. निर्निमेषगणः = ದೇವ ಸಮೂಹ. उषर्बुधः = ಅಗ್ನಿಯು उन्मिमेषः = ಜ್ವಲಿಸಿತು.

गद्य—परिघः = ಒಂದು ರೀತಿಯ ಆಯುಧ.

यामिनीचरगणम् = ರಾಕ್ಷಸರ ಗುಂಪನ್ನು.

जघान — लिट्     प — पद

57 विश्वंभराबर्हिणी = ಭೂಮಿಯೆಂಬ ನವಿಲು.

वधूटी = वीरवधूः। कादम्बिनी=मेघः। धूम्या = ಹೊಗೆಯ ಸಮೂಹವು.

"पाशादिभ्यो यः" ಎಂಬ ಅನುಶಾಸನದಿಂದ ಯ ಪ್ರತ್ಯಯವು ಬಂದಿದೆ.

ಈ ಪದ್ಯದಲ್ಲಿ ಮತ್ತು 58, 59 ನೇ ಪದ್ಯಗಳಲ್ಲಿಯೂ ಹೊಗೆಯ ಸಮೂಹವನ್ನು ವರ್ಣಿಸಲಾಗಿದೆ.

61 द्वे वा त्रीणि वा द्वित्राणि

सौदामिनीसंहतिः = ಮಿಂಚುಗಳ ಸಮೂಹ.

66 एनः = ಪಾಪ   पलाशः = ಮುತ್ತುಗ, ರಾಕ್ಷಸ   यायजूकः = ಯಜ್ಞ ದೀಕ್ಷಿತನು.   अक्षविजयः = ಇಂದ್ರಿಯಗಳನ್ನು ಗೆದ್ದ. ಅಕ್ಷಯಕುಮಾರನನ್ನು ನಾಶಗೊಳಿಸಿದವನು

ಮಾರುತಿಯೆಂಬ ಯಜ್ಞದೀಕ್ಷಿತನು ರಾವಣನ ಸಮಾಗಮದಿಂದುಂಟಾದ ಪಾಪವನ್ನು ಹೋಗಲಾಡಿಸಿಕೊಳ್ಳುವ ಇಚ್ಛೆಯಿಂದ ಅಕ್ಷಕುಮಾರನನ್ನು ಗೆದ್ದು ತನ್ನ ವಾಲಾಗ್ನಿಯಲ್ಲಿ ರಾಕ್ಷಸರೆಂಬ ಸಮಿತ್ತುಗಳನ್ನು ಹೋಮಮಾಡಿ ಪರಿಶುದ್ಧನಾದನು.

ಇಲ್ಲಿ ರೂಪಕಾಲಂಕಾರ.

गद्य—वानराणां वरूथिनी ವಾನರ ಸೈನ್ಯ

सरण्यां मध्ये = मध्येसरणि–

"पारे मध्ये षष्ठ्या वा" इत्यव्ययीभावः।

68 वलीमुखान् = ವಾನರರನ್ನು    शिलीमुखान् = ದುಂಬಿಗಳನ್ನು

70 ಸಂತಸಗೊಂಡ ವಾನರರ ಸ್ವಾಭಾವಿಕ ಲೀಲೆಯನ್ನು ಇಲ್ಲಿ ವರ್ಣಿಸಲಾಗಿದೆ.

पुच्छच्छटां आधूय = ಬಾಲಗಳನ್ನು ತಿರುಗಿಸುತ್ತಾ

अहंप्रथमिकापीना—अहं प्रथमः अहंप्रथमः इति यस्यां क्रियायां सा अहं

प्रथमिका तया पीना (पूर्णा) ನಾನು ಮೊದಲು ತಾನು ಮೊದಲು ಎಂದು ಉಬ್ಬಿದವರಾಗಿ.

71 समीरस्य पुत्रः = ಮಾರುತಿ.

सुमित्राया अपत्यं पुमान् – सौमित्रिः. कलयन् – गृहीत्वा ।

72 अक्लेशेन संभूते गतागते ताभ्याम् ಅನಾಯಾಸವಾಗಿ ಹೋಗಿ ಬಂದ.

पृतना = ಸೇನಾ अक्ष्णोः समीपे = समक्षम् ವಾನರ ಸೇನೆಯ ಎದುರಲ್ಲಿ

74 निशिचरीणां गणः तेन बाध्यमानाम् भुजंगमराजकन्याम् = ನಾಗಕನ್ನಿಕೆಯನ್ನು

75 प्रस्थातुं कामः यस्य सः = प्रस्थातुकामः

"तुं काममनसोरपि" ಎಂಬ ವಾರ್ತಿಕದಿಂದ तुम् ಪ್ರತ್ಯಯದ म ಕಾರವು ಲೋಪವಾಗಿದೆ.

76 ब्रह्मास्त्रेण वित्रस्तः भीतः ब्रह्मास्त्रवित्रस्तः स चासौ जयन्तश्च तस्य कृत्याम् ।

ಬ್ರಹ್ಮಾಸ್ತ್ರದಿಂದ ಗಾಬರಿಗೊಂಡ ಜಯಂತನ ಕಾರ್ಯವನ್ನು.

77 प्रस्थातुमिच्छून् प्रतिष्ठासून् ಹೊರಡಲು ಬಯಸುತ್ತಿರುವ आशय त्वदागमन-प्रतीक्षया एकया पालितान् – गुप्तान् ।

ನಿನ್ನ ಆಗಮನದ ಆಸೆಯೊಂದಲೇ ರಕ್ಷಿಸಲ್ಪಟ್ಟಿರುವ

ಸ್ವಾಮಿ, ತನ್ನ ಶರೀರದಿಂದ ಹೊರಟು ಹೋಗಲು ಬಯಸುತ್ತಿರುವ, ನಿನ್ನ ಆಗಮನ ಪ್ರತೀಕ್ಷೆಯೊಂದರಿಂದಲೇ ರಕ್ಷಿತವಾದ ಅವಳ ಪ್ರಾಣವನ್ನು ಹೊರಟು ಹೋಗದಂತೆ ನಿನ್ನ ಗುರುತಿನ ಮುದ್ರೆಯುಂಗರದಿಂದ ಮುದ್ರಿಸಿ ನಾನು ಬಂದಿದ್ದೇನೆ.

ಅಭ್ಯಾಸ-ಪ್ರಶ್ನೆಗಳು

1) ಮಾರುತಿಯು ಸಮುದ್ರೋಲ್ಲಂಘನಕ್ಕಾಗಿ ಹಾರಿದಾಗ ಮಹೇಂದ್ರಶೈಲದಲ್ಲಾದ ಪರಿಣಾಮವೇನು ?

2) ಕವಿಯು ಸಂಧ್ಯಾಕಾಲ, ಚಂದ್ರೋದಯಗಳನ್ನು ಹೇಗೆ ಚಿತ್ರಿಸಿದ್ದಾನೆ ?

3) ಅಂಜನೇಯನಿಗೂ–ಸೀತಾದೇವಿಗೂ ಆದ ಸಂವಾದವನ್ನು ವಿವರಿಸಿ.

4) ಮಾರುತಿಯು ಇಂದ್ರಜಿತುವಿನಿಂದ ಬಂಧನವಾಗುವವರೆಗಿನ ರಾಕ್ಷಸ ವಧೆಯನ್ನು ಸಂಗ್ರಹಿಸಿ.

5) ಪ್ರಹಸ್ತನ ಪ್ರಶ್ನೆಗೆ ಮಾರುತಿ ಏನು ಉತ್ತರ ಕೊಟ್ಟನು? ವಿವರಿಸಿ.

## (ಆ) ನೀಲಕಂಠವಿಜಯ ಚಂಪೂಃ

ನೀಲಕಂಠವಿಜಯ ಚಂಪೂ ಸಂಸ್ಕೃತದ ಪಂಚ ಚಂಪೂಗ್ರಂಥಗಳಲ್ಲೊಂದು. ನೀಲಕಂಠ ದೀಕ್ಷಿತನು ಇದರ ಕರ್ತೃ. ಭಾನುದೇವಿ–ನಾರಾಯಣದೀಕ್ಷಿತರು ಇವನ ಮಾತಾ ಪಿತೃಗಳು ಅಪ್ಪಯ್ಯ ದೀಕ್ಷಿತರ ತಮ್ಮನಾದ ಅಚ್ಚಾದೀಕ್ಷಿತರ ಮೊಮ್ಮಗ. ವೆಂಕಟೇಶ್ವರ ಮಖಿಗಳು ಇವರ ಗುರುಗಳು. ಕವಿಯು ಸಕಲಶಾಸ್ತ್ರಗಳಲ್ಲೂ ನಿಷ್ಣಾತನಾಗಿದ್ದನು. ಇವನು ತಿರುಮಲ ನಾಯಕನ ಅಮಾತ್ಯನೂ ಆಗಿದ್ದನು. ಮಹಾಶೈವನಾದ ಕವಿಯು ಶೈವಸಿದ್ಧಾಂತದಲ್ಲಿ ಪಾರಂಗತನಾಗಿದ್ದನು. ಇವನಿಗೆ ನಾಲ್ವರು ಸೋದರರಿದ್ದರು. ಎಲ್ಲರೂ ಕವಿಗಳೇ. ಶಿವತತ್ತ್ವರಹಸ್ಯ, ಪ್ರದೀಪ ವ್ಯಾಖ್ಯಾನ, ಚಿತ್ರಮೀಮಾಂಸಾದೋಷಧಿಕ್ಕಾರ, ನೀಲಕಂಠವಿಜಯ ಚಂಪೂ, ಶಿವಲೀಲಾರ್ಣವ, ಗಂಗಾವತರಣ ಇವು ಕವಿಯ ಪ್ರಸಿದ್ಧ ಕೃತಿಗಳು. ಇದಲ್ಲದೆ ಕಲಿವಿಡಂಬನಂ, ಸಭೀರಂಜನಶತಕ, ಶಾಂತಿವಿಲಾಸ, ವೈರಾಗ್ಯಶತಕ, ಆನಂದಸಾಗರ, ಶಿವೋತ್ಕರ್ಷಮಂಜರಿ, ಶಾಂತಿವಿಲಾಸ, ಅನ್ಯಾಪದೇಶ ಶತಕಗಳೆಂಬ ಚಿಕ್ಕಕೃತಿಗಳೂ ಅವನವೇ. ಕವಿಯ ಪಾಂಡಿತ್ಯ ಅನ್ಯಾದೃಶವಾದುದು. ಕವಿಯು ವಕ್ರೋಕ್ತಿಯಲ್ಲಿ ಚತುರನಾಗಿದ್ದನು. ಆ ಕಾರಣದಿಂದಲೇ "ಉಪಮಾ ಕಾಲಿದಾಸಸ್ಯ" ಎಂಬ ಸೂಕ್ತಿಯಂತೆ "ನೀಲಕಂಠಸ್ಯ ವಕ್ರೋಕ್ತಿಃ ಸಾ ಮುಗ್ಧೇಂದುಕಲಾನಿಭಾ" ಎಂಬ ಹೇಳಿಕೆ ಜನಜನಿತವಾಗಿದೆ.

श्रीमन्नीलकण्ठदीक्षितप्रणीतः

# नीलकण्ठविजयः

## पीठिका

वन्दे वाञ्छितलाभाय कर्म किं तन्न कथ्यते ।
किं दंपतिमिति ब्रूयामुताहो दंपती इति ॥ १ ॥

दृष्ट्वा कौस्तुभमप्सरोगणमपि प्रक्रान्तवादा मिथो
गीर्वाणाः कति वा न सन्ति भुवने मारा दिवः केवलम्
निष्क्रान्ते गरले द्रुते सुरगणे निश्चेष्टिते विष्टपे
मा भैष्टेति गिराविरास धुरि यो देवस्तमेव स्तुमः ॥ २ ॥

अपि च,

लीढालीढपुराणसूक्तिशकलावष्टम्भसंभावना
पर्यस्तश्रुतिसेतुभिः कतिपयैर्नीते कलौ सान्द्रताम् ।
श्रीकण्ठोऽवततार यस्य वपुषा कस्क्यात्मनेवाच्युतः
श्रीमानप्पयदीक्षितः स जयति श्रीकण्ठविद्यागुरुः ॥ ३ ॥

यः संरम्भः कृतिविरचने दुष्कवीनामभेद्यो
यच्चैकाग्र्यं तदुचितपदान्वेषणे चित्तवृत्तेः ।
लभ्यं तच्चेदपि कवयतामन्ततस्त्रीण्यहानि
स्यादेवं किं सरसकविताराज्यदुर्भिक्षयोगः ॥ ४ ॥

अथवा किमिति स्मरामि दुष्कवीनधुना

सकल भुवनैकमङ्गळशङ्करगुणवर्णनप्रवृत्तेन ।
न स्मरणीयाः कुधियो लोकायतिका इव व्रतस्थेन ॥ ५ ॥

कति कवयः कति कृतयः
कति लुप्ताः कति चरन्ति कति शिथिलाः ।
तदपि प्रवर्तयति मां
शङ्करपारम्यसंकथालोभः ॥ ६ ॥

देवानामपि दैवतं गुरुमपि प्राचां गुरूणामिह
श्रीमन्तं मदनान्तकं कथमपि स्तोतुं कृतो निश्चयः ।

तेन त्वां त्वरयामि भारति बलात्कृष्टापि दृष्टे पथि
प्रासेनोपहतापि जातु कुपिता मा स्म प्रसादत्यजः ॥ ७ ॥

मन्तव्याः कवयः कतीह बहुमन्तव्या रसज्ञाः कती-
त्येतावत्त्वलसः करोमि कवयो हृष्यन्तु रुष्यन्तु वा ।
आवात्स्यायनतन्त्रमा श्रुतिशिरः सिद्धान्तमुच्चावचा
विद्या यत्प्रभवा जयन्ति भुवि तां वन्दे गिरां देवताम् ॥ ८ ॥

चौर्येण प्रणयेन चापहरतः पल्लीषु गव्यान्यपि
स्त्यायन्ते चरितानि चेत्कविकुलोद्गीतानि गाथाशतैः ।
त्रैलोक्योद्भटकालकूटकबलीकारप्रकारं पुनः
स्तोतुं के प्रथमेऽपि नाम कवयो दूरेऽधिकारस्तु नः ॥ ९ ॥

अष्टत्रिंशदुपस्कृत सप्तशताधिक चतुःसहस्रेषु ।
कलिवर्षेषु गतेषु ग्रथितः किल नीलकण्ठविजयोऽयम् ॥ १० ॥

अस्ति किल समस्तसुरासुरस्तोमवन्दितचरणारविन्दस्य भगवतो महेन्द्रस्य स्थानं, आस्थानममृतान्धसां, आयतनमाश्चर्याणां, आकरो रत्नानां, अवधिर्वैषयिकानन्दस्य, किमपरमगोचरे गिराममरावती नाम नगरी । तत्र च निरालम्बे नभसि वर्तमानतया सर्वपथीनद्वारतया च पुनरनपेक्षितमूलशिलानिवेशनायासं, अनाकांक्षि प्रतीहाररचनाप्रयासं, असंपादितशृङ्गसंबाधं, असंभावितपरिखामण्डलं, आचार इति केवलमभिनिर्वर्तितो नवः प्रकारः । प्रासादः पुनरस्ति वैजयन्त इत्यभूमिरारोहणोपयोगविधुरश्च । सर्वतोऽप्रतिहतचाराणां पौराणाममृतास्वादसुहितानामभ्यवहार्येण किं प्रयोजनम् । अपि च पुनरभिलषितमणिकनक भूषणाम्बरसंदायिषु मन्दारादिशाखिषु न किंचिदस्ति क्रेतव्यं,

## तृतीयाश्वासः

उपासीना नानाविधिभिरुपहारैश्च विविधैः
शरण्यं लोकानां शशधरकलोत्तंसममराः ।
मृषा संधित्सन्तः प्रकृतिकुटिलैर्दानवगणै
र्विरिञ्चस्यादेशादवृणुत गुरुं दूत्यविधये ॥ १ ॥

परायणं नः परमं भवान्यतो
गुरुः पुरोधाः सचिवश्च दैवतम् ।
अतो वयं तावदनन्यसाधना
वृणीमहे त्वामवमेऽपि कर्मणि ॥ २ ॥

इति प्रार्थितो देवैरिदमुवाच वाचस्पतिः—'नैतदभिधातव्यम् । नहि किंचिदवमं नाम कर्मास्ति राजोपजीविनाम् ।

तत्तस्य कीर्तिदं कर्म तदलभ्यं तदीप्सितम् ।
राजानः पुरुषं यत्र राजकीये नियुञ्जते ॥ ३ ॥

परन्तु किंचिदत्र विवेक्तव्यम् । तथाहि—

अनालोच्य निजां शक्तिमदृष्ट्वा कार्यगाधताम् ।
औत्सुक्यादवगाहन्ते मन्दा मज्जन्ति चातलम् ॥ ४ ॥

सन्धिर्नाम ऋजूपायः साधुष्वेवायमायतते न पृथग्जनेषु । दूरे पुनर्दुरहङ्कारदूषितेषु दानवेषु । किंच । दूतवाङ्मुखकौशल साधनीयोऽयमर्थः कथं नाम दूतदर्शनमप्यसहमानेषु संघटते । श्रूयन्त एव हि वैश्रवणेन प्रहितो दूतः सद्य एव समापितः सदसि लङ्कापतेः । अपि च, प्रवृत्ताः समरकर्मणि भग्नोद्यमाः सर्वतोऽपि सन्धित्सन्ते दूरदर्शिनो लब्धुं कथंचिदपि लिप्सितं, न तु लब्धमपि नाशयितुम् , पश्यत—

स्थानाच्च्यावयितुं क्षणात्पुनरपि स्थानेऽभिषेक्तुं च वा
शक्ताः केलिकथान्तरेष्वपि भवन्त्यर्धोद्गता यद्गिरः ।
तेऽमी सर्वसुनिर्वृता दनुभुवः संधाय किं धावता
भिक्षार्थं परितोऽधुना मघवता संपादयन्त्वीप्सितम् ॥ ५ ॥

अपि च--

गौरश्वः करिणः स्त्रियो मणिगणाः शास्त्राणि वस्त्राणि वा
यानि प्राभृतयेम तान्यपहृतान्याक्रम्य तैरेव नः ।
तद्रिक्तेन करेण रिक्ततरया वाचापि चाहं कथं-
शक्तः स्यां दनुजेश्वरान्वशयितुं संद्रष्टुमप्यन्ततः ॥ ६ ॥

इति युक्तियुक्तमुपपाद्य विरमति विदेवगुरौ, विहस्तेषु च समस्तेषु दैवतेषु कृतमुखः स्वयं शतमखः किंचिदिदमाचचक्षे । 'भगवन्नेवमेवैतद्यदभिहितं भवता । किंतु-

निःसंख्यस्फुरदुत्तरोत्तरचमत्कारासु धारासु ते
वाचामक्षरमक्षरं त्रिजगतीवाग्गर्वसर्वंकषम् ।
श्रोतुं लालयितुं पुनः प्रतिसमाधातुं च वा किंचिद-
प्यर्वाञ्चः क इमे वयं यदि परं देवः स वाचांनिधिः ॥ ७ ॥

परं त्विदमेकमनुस्मारयाम्यादिष्टं यदध्यक्षमेव नः समस्तानां संधानं कुरुतासुरै-रिति शार्ङ्गधन्वना परमेष्ठिने, यदपि च तेन तुभ्यम् ।

शिष्टं यदत्र दुष्टं वा न विवेक्तुं क्षमामहे ।
स जानाति स जानीते त्वं जानीषे तदन्ततः ॥ ८ ॥

अनितरशरणत्वमात्मनस्तद्
दृढमुपपादयताथ देवभर्त्रा ।

प्रतिहतवचनो गुरुः सुराणां
प्रकटयितुं प्रियमात्मनः प्रतस्थे ॥ ९ ॥

गच्छन्नेव च स पथि सर्वं करणीयमवधारयामास । अपि च—

अयं कालो बुद्धेरयमवसरश्चाटुवचसा-
मियं युक्ता वेला दिशि दिशि यशः संघटयितुम् ।
असावत्यर्घो नः सुकृतमुपचेतुं सुमहदि-
त्यवस्यन् प्राप प्रागसुरगुरुमाखण्डलगुरुः ॥ १० ॥

ततश्च तमतर्कितोपनतमभिगम्य सह शिष्यैः, अभ्यर्च्य विधिवदर्घ्यादिभिः सपर्याभिः, आसयन्महति विष्टरे, भार्गवः स्वयमासीनस्तदनुज्ञया सविनयमिदमाचचक्षे— 'अद्य मे सफलं जीवितं, अद्य हुतं विधिवदग्निषु, अद्य दत्तमतिथिष्वभ्यागतेषु, अद्याधीतमागमेषु सरहस्येषु, अद्याराधिता गुरवः, अद्य फलिनो गृहाश्रमाः, किं बहुना अद्यायमन्वयः प्रतिष्ठितो भृगोः यदनुल्लिखितं मनोरथैः, अनवाप्यं तपोभिरपि आशासनीयं गृहमेधिनां, आसादितमनायासेन मया स्वयमागमनं भगवतोऽधुना' इत्युदाहरति भार्गवे पुनरिदमुवाच वाचस्पतिः—

पुत्रावुभौ प्रथमजौ भृगुरङ्गिराश्च
स्वय.तौ कुले शमवतां ननु पद्मयोनेः ।
तद्भार्गवस्य कुलमाङ्गिरसः प्रपन्न-
श्चित्रीयते किमिह सोदरसंप्रयोगे ॥ ११ ॥

अपि च,

निष्ठमाश्रमधर्मपालनविधौ नित्याभियोगं शिवे
शक्तं कर्तुमकर्तुमन्यथयितुं तन्त्रेषु राज्ञामपि ।

श्रावंश्रावमनुक्षणोपचितया प्रीत्याहमस्म्यागतो
यत्सत्यं भवदीक्षणाय हृदये तत्रावयोः साक्षिणी ॥ १२ ॥

इत्यभिदधानो गुरुरलमतिवात्सल्याददतिलालनेनेत्यभिधाय, विसृज्य सामाजिकान् विविक्ते पृष्टः कविना समागमनकारणमुदाजहारैनमुपपत्तिगर्भया गिरा। आवेद-नीयं किमखिलवेदिषु भवादृशेषु। तथा हि—

जानीषे जगदेव तावदखिलं स्वप्नेन्द्रजालोपमं
जानीषे ह्यधिकारदुर्विलसितं संसारमप्यावयोः।
जानीषे भगवत्परिग्रहपरीणाहं सुपर्वस्वपि
व्याहर्तव्यमितोऽस्ति यत्तदपि ते नापेक्षते मद्गिरम् ॥ १३ ॥

अपि च—

येनादिश्यत वेधसा जनिमतामद्रोहतो जीवनं
तेनैव त्वयि दुर्धियां दनुभुवामादिष्टमाचार्यकम्।
अस्मिन् किं करणीयमर्थगहने मीमांसकैर्मादृशैः
शक्तस्त्वं त्वनुवर्तितुं तदपि खल्वाकाशवद्वर्तितुम् ॥ १४ ॥

तत्कथंचिदेकीकृत्य देवासुरानेकान्तशीलाभ्यामावाभ्यामासितव्यमिति वक्तुकामोऽहमागतोऽस्मि।' इत्यभिहितो गुरुणा यथार्थमेव तदालोचयन् कविरिदमाबभाषे—भगवन्नेवमेवैतत्।

तथा हि—

जानाम्येव यदाह पद्मनिलयो यच्चाह विश्वंभरो
यच्चास्ते हृदि ते यथा किल तदप्यग्रे विवर्तिष्यते।
कस्त्वं संघटनेऽसि को विघटनेऽस्म्याकृष्य विश्वात्मना
योक्ष्यन्ते नचिरेण चेह तृणवद्वातेन देवासुराः ॥ १५ ॥

तदस्तु यथातथा वा संमुखीकरिष्यामि दानवान् , संभावयिष्यामि च भवन्तं, ततो यथामनोरथमभिधीयतां' इत्युपच्छन्द्य, समानीय बलेः सभां, सभाजयन्विविधैरुपचारैः, संलापयामास वासवगुरुम् । भगवन् दिष्ट्यासि दृष्टश्चिराय; किमागमनकारणं ? किं कुशली मे भ्राता पुरन्दरः ? स किं करोति ? किमावसति ? नामापि तस्य न शृणुमहे तदाप्रभृति ' इत्यनुयुञ्जाने बलौ सोत्प्रासमाददे गिरमाङ्गिरसः ॥

देयं यस्य सदेवमर्त्यभुजगं विध्यण्डमेवाखिलं
पात्रं यस्य जगन्निधिः स भगवान्देवः सरोजेक्षणः ।
शिष्यो भूतपतेरसौ कुलगुरुर्यस्योशना भार्गवः
कीर्तिर्दानवराज तस्य भवतः कासां न पारे गिराम् ॥ १६ ॥

तदभिगम्यापि सुदूरमवलोकयितव्यः पुण्यश्लोको जन इत्यागतोऽस्मि । भ्रातुरपि ते वृत्तान्तमावेदयामि ॥

यस्यैवं भूर्भुवस्स्वर्भुवनपरिवृढो वर्तसे पूर्वजस्त्वं
दुर्दान्तध्वान्तभानुः स भवति भगवानेव यस्यानुजन्मा ।
संप्राप्तो यश्शरण्यं त्रिभिरपि करणैर्देवदेवं त्रिणेत्रं
प्रष्टव्यं तस्य कस्मिन् कुशलमकुशलं तस्य जिष्णोः कुतःस्यात्
॥ १७ ॥

स यदैव सङ्गररङ्गमारूढो योद्धुकामोऽवतस्थे तदैव तमशरीरिण्या गिरा निवर्तयिष्यन्नाहवान्निर्मार्ष्टुं मुनिशापमालिन्यमभ्युदयेन च योक्तुमधिकेन परमे तपसि परमेश्वरो नियुयुजे ॥

यः शक्यो न दृशापि गोचरयितुं सत्त्वैस्तमोगन्धिभि-
र्यत्र ब्रह्म सनातनं गिरिजया स्वैरं परिक्रीडते ।
अध्यारुह्य तमेव मन्दरमभिध्यायन्य आस्ते शिवं
कस्तं द्रक्ष्यति कः प्रवक्ष्यति कथां देवोऽपि वा दानवः ॥ १८ ॥

प्रह्लादः प्रथमो गुरुर्भगवतस्तन्त्रेषु लक्ष्मीपते-
र्व्यातेने च विरोचनं कमलभूरध्यात्मविद्यानिधिम् ।
बाणः पारिषदाग्रणीः पशुपतेस्त्वं तु प्रवेकः सतां
सिद्धानामपि योगिनामशृणवं नैवं कुलं निर्मलम् ॥ १९ ॥

तदत्र महाकुलप्रसुतस्य भवतो महदनुशिष्टस्य किमावेदनीयमन्यैः । स्वयमेव महाभागः स्वरूपं पर्यालोचयतु कार्यस्य ॥

ददति च वरं दत्वा सद्यस्तमन्यथयन्ति च
द्रुहिणहरगोविन्दाद्या दैत्येष्विति स्फुटमेव वः ।
न च नियमतो देवानेवानुकम्पितुमीशते
यदसुरवरान् मध्ये मध्ये समुद्भ्रमयन्ति च ॥ २० ॥

अतो ब्रह्मेशविष्णूनामपि शुद्धचिदात्मनाम् ।
आचूडादानखाग्रेभ्यो मन्ये मायामयं वपुः ॥ २१ ॥

तदप्रदाय परेभ्योऽवकाशमन्योन्यसमवेतेषु युष्मासु—

यन्नैश्चिन्त्यं यदौर्जित्यं यद्बलं या सुखासिका ।
यद्यशो यत्प्रतापश्च सर्वं तदनुचिन्त्यताम् ॥ २२ ॥

आस्तामिदम् । अवश्यं हि विग्रहवत्सु युष्मासु भवितव्यमप्रकाशेन मया वा भार्गवेण वा । तथा च

निर्वर्त्यमाना यत्नेन निर्जरैरसुरैश्च वा ।
काः क्रियाः फलवत्यः स्युरावयोरप्रकाशयोः ॥ २३ ॥

आखण्डलस्य तु मतिरन्यादृशी—

स्थीयतामग्रजैः स्वर्गे जीयतामनुजेन वा ।
सर्वथा भ्रातृभाग्येन संवृत्तं नः प्रयोजनम् ॥ २४ ॥ इति ।

अहं तु भवतः सार्वज्ञ्यादविशङ्कमवादिषम् । न खल्वात्मनः सचिवोक्तमित्येवादरणीयं परसचिवोक्तमिति वा परिहरणीयं, धीमतां धीरेव सचिवः शासिता' इत्यभिधाय विरमति देवगुरौ, अवलोकितो बलिना, भार्गवः सामाजिकाननुमोदयन्निदमाचचक्षे—भो भो, सकलाशयमर्मज्ञाः समयज्ञाः सन्धिविग्रहयोः, पारीणा नीतिपथे, भवन्त एव प्रमाणमर्थेषु ।

यद्यप्यद्य गतश्रियः सुमनसो यद्यप्यसौ तद्गुरु—
र्यद्यप्यस्ति फलं न किंचिदपि नः सन्धाय साध्यं सुरैः ।
पर्यालोच्यमथापि किंचिदुदधिं निर्मथ्य लब्ध्वा सुधां
पास्यामो वयमित्यसौ रहसि मां यत्प्राह दिव्यो मुनिः ॥ २५ ॥ इति।

तच्छृण्वन्त एव दानवाः संमोहिता मायया वैष्णव्या सद्य एव संमेनिरे । आहुश्च ।

'संधास्यामः शमधनगिरा निर्व्यलीकं सुरैः प्राक्
क्षोभिष्यामो जलधिममृतं तत्र लप्स्यामहे च ।
पास्यामश्चाप्यथ तदुभये यद्यमी साधवः स्यु
र्नैवं चेत्किं विहतमियता बाहवः क्वागमन्नः ॥ २६ ॥ इति ।

ततः साधु साध्वित्यनुमोद्यमानाः सचिवेन, प्रस्थाप्य वाचस्पतिं, प्रथमतः संधास्यन्तः प्रतस्थिरे दानवाः सद्य एव मन्दरम् । पूर्णमनोरथश्च गुरुः पुनरुपावर्तमानः संददर्श मन्दरमेत्य संततशिवध्याननिर्धूतकल्मषान् शिवार्चनव्रतिनः शिवार्पितप्राणान्, शिवनामकीर्तनपवित्रितमुखान्, शिवकथापारायणपरान्, शिवाहंभावभावितान्, शिवाद्वैतवादवादकोविदान्, भस्मदिग्धतनुरुहान्, भसितत्रिपुण्ड्रमण्डित पञ्चाष्टादिस्थानमनोहरान्, प्रालम्बि-जटाजूट-वलयावलम्बित शकुनिकुलनाद

शकुनावेदितसंनिहितशांभवप्रसादान् शुद्धाध्ववर्तिनो विज्ञानकलमानिव शुनासीरमुखान् बर्हिर्मुखान् ।

आख्याय निखिलं वृत्तमाशयं च विरोधिनाम् ।
आदितेयान् स दैतेयैः संधातुं समनीनहत् ॥ २७ ॥

ततो महता बलेन महता संनाहेन महता चावधानेन संधातुमागताः सर्वेऽपि दानवाः, प्रकृतिकुटिला अपि परिणत तपोविशेषेण परिक्षीणकल्मषतया दुर्दर्शान् मध्याह्नभास्करानिव, दुरासदान् युगान्तपावकानिव, विस्रम्भणीयान् विश्वसृजइव, पुनःपुनर्दर्शनीःयान् पूर्णसुधाकरानिव, संलक्ष्य गीर्वाणान्, संत्यज्य दुर्विशङ्कितानि, प्रतिषिध्यानुयात्रिकान्, परिहृत्य शस्त्रास्त्राणि, निर्मलेन मनसा निरन्तरं परिरेभिरे । संक्रन्दनोऽपि यथान्यायं समागम्य दानवैः, अभिवन्द्य पुरोधसं भार्गवं, अनुमतो वाचस्पतिना, किरन्निव सुधारसं किंचिदिदमाचचक्षे—

साफल्यं तपसामिदं सुमहतां साफल्यमक्ष्णामिदं
साफल्यं पितुराशिषामिदमिदं साफल्यमस्यायुषः ।
श्रीमत्काश्यपतातपादचरणस्थानोचितैर्भ्रातृभि-,
र्ज्यायोभिर्यदहं विरोचनमुखैर्वात्सल्यपात्रीकृतः ॥ २८ ॥

अपि च—

आराध्दा ननु यूयमेव गुरवस्त्रैलोक्यराज्यार्पणा-
दाराद्धा गुरुभार्गवप्रभृतयो ब्रह्मर्षयः शक्तितः ।
किं कर्तव्यमितोऽपि केवलमिह श्रान्तोऽस्मि शान्तोऽस्मि च
प्राप्तुं तत्परमामृतं यदि भवत्याज्ञा यतिष्ये सुखम् ॥ २९ ॥

इति वदन्तं भ्रातरमिद्रमिदमाहुरसुरेश्वराः

'मैवमाखण्डल, मैवम् ।

त्वमसि शतक्रतुस्त्वमसि नीतिपथे कुशल-
स्त्वमसि दयास्पदं भगवतः प्रमथाधिपतेः ।
अपि खलु बालकेन भवता भवता मघवन्
निखिलमनाकुलं कुलमिदं प्रतितिष्ठति नः ॥ ३० ॥

व्यापृते त्वयि तपसि राज्यमिदं व्याकुलीभवेदिति संरक्ष्यतेऽस्माभिरनियुक्तैरपि साम्य मेवानुचिन्त्य भवतः ॥

एकेन विधृतं राज्यमियन्तो वयमीदृशाः ।
निर्वहन्तोऽद्य जानीमो नैपुण्यं वत्स तावकम् ॥ ३१ ॥

अमृतं यदि भोक्तव्यमनुमन्यामहेतराम् ।
संविभज्यैव तद्भोज्यं न निर्भज्येति नो मतिः ॥ ३२ ॥

तदाख्यातु भवानर्णवमथनोपायमादिष्टं नारायणेन' इत्यनुयुञ्जानेषु दानवेषु, यथाश्रुत माख्याय पुरन्दरस्तमेव मन्दरमुत्पाट्य सागरे निपातयितुमुत्साहयामास बलिम् । ततः 'कियदेतदुत्पाटनं नाम गिरेः, विधमामो मुखमारुतेन, विक्षिपामोऽङ्गुलिस्फोटेन समुद्धरामो वामहस्तेन, संक्रमयामः सायकेनैकेन' इति बलोत्सेकादुच्चावचं गर्जत्सु दानवेषु, बलिरिदमवादीत्— हन्त, कथमर्भका इव यूयमकृतप्रज्ञा इव निरङ्कुशं प्रतिजानीध्वे ।

विंशत्यापि भुजैः पुरा गिरिवरं विक्षोभयन् शूलिनः
पादाङ्गुष्ठनखाग्रयन्त्रणदलद्दोःसन्धिबन्धश्चिरम् ।
क्रोशं क्रोशमवाप वार्षिकनिशामण्डूकवद्यः श्रमं
युष्माभिः श्रुतिगोचरं न गमितः शङ्के स लङ्केश्वरः ॥ ३३ ॥

अपि द्रष्टुमशक्यो यः सिद्धैरपि महर्षिभिः
विना शंभोः प्रसादेन कथमुत्पाटयेम तम् ॥ ३४ ॥

तदद्य वयं सर्वे प्रपद्य भगवन्तमुमाकान्तं प्रसाद्य वाङ्मनःकायैः प्रार्थयेमहि प्रार्थनीयं' इति। ततः साधु साध्वित्यभिनन्द्यमाना भार्गवाङ्गिरसाभ्यामन्योन्यकृत संविदो देवासुराः, प्रतिपद्य मन्दरं शैलं, प्रणिधाय मनांसि, वर्तमानाः कठोरे तपसि, वाग्भिरस्तुवन्नित्थमम्बिकारमणम्—

युगविगमोन्मिषद्विषमलोचनकोणपत-
द्दुतवहविस्फुलिङ्गहुतसर्वजगद्भविषे ।
अचलधनुर्धराय हरिणाङ्कशिखामणये
विजयजयैकहेतुविशिखाय नमो भवते ॥ ३५ ॥

शिवं ध्यायस्यन्तः सकलजगतां यच्छसि शिवं
शिवोऽसि त्वं नाम्ना ननु शिवतरश्चासि विदितः ।
शिवार्थी जन्तुस्तच्छिवमखिलभावेन भगवन्
भवन्तं हित्वान्यं शरणयतु कं न्यायशरणः ॥ ३६ ॥

तदिदानीम्—

मन्दिरं क्षाळयन्तस्ते मन्दरं दुग्धसागरे ।
अमृतं लब्धुमिच्छामस्तद्भवाननुमन्यताम् ॥ ३७ ॥

ततस्तथा कुरुतेति घनस्तनितगम्भीरया गिरा गगनसंभवया सन्तोषिताः सन्तोऽसुराः सुराश्च समनह्यन् ।

विनिघ्नन्तः पादैरथ विचलयन्तः करतलै-
रुदस्यन्तो दण्डैरुपरि च किरन्तस्तमिषुभिः ।
निषेदुः श्रान्तास्ते यदपि च विषेदुर्दनुभुवो
निमित्तं दुष्टं तन्निखिलमुशना तेषु जगृहे ॥ ३८ ॥

अथ प्रतीक्षमाणश्चरलग्नमाचार्यो दिवौकसां 'संवर्तोचितं रूपमालम्ब्य सर्वतो वाहि' इति सन्दिदेश गन्धवाहम् ।

अथ दिवसावसान इव पद्मभुवः पवनः
स्वयमकृतक्षणादिव विदिक्षु च दिक्षु चरन् ।
अलघुविघूर्णितार्णवसमुक्षितकुक्षितल-
क्षितिवलयार्द्रताशिथिलमूलमहार्यकुलम् ॥ ३९ ॥

स्तोकस्तोकप्रचलदनिलग्रासदुर्भिक्षखेदैः
कालं कालं कथमपि चिरं यापयांचक्रिरे ये ।
आकण्ठं ते पपुरिममविच्छिन्नधारं समीरं
प्राप्ताः शम्भोरुपकरणतां पन्नगास्तन्नगाग्रे ॥ ४० ॥

अथ तमदृष्टचरं वेगमनलसारथेरभिनन्दत इव मन्दरस्य गिरेरलक्ष्यत मनागिव शिरःकम्पः ॥

चकम्पे हन्तायं गिरिरनुचकम्पे पुरहरो
जहीतेदं क्लैब्यं जहित वृथावस्थितमिदम् ।
इति स्वेन स्वेन व्यवसितधियः काश्यपसुताः
समेता गर्जन्तः सपदि चलयामासुरचलम् ॥ ४१ ॥

तदानीं च

निष्पतद्द्रुममुत्पतत्खगमद्भुतस्खलदश्मभू-
र्झर्झरस्रुतनिर्झराम्बुझळज्झळारवभैरवम् ।
गर्भगह्वरनिर्भरभ्रमदुद्भटानिलपूरित-
क्रन्ददन्तरकन्दरं किल मन्दरं ददृशुर्जनाः ॥ ४२ ॥

गर्जन्तश्च ते तदनु पर्जन्या इव गणयन्तश्च करगतमेव कार्यमशेषं, पूर्वतो दिक्पतीन्

दक्षिणतो देवानपरान्, पश्चिमतो बाणं सहस्रबाहुं, उत्तरतो महासुरानितरानपि विभज्य विनियुञ्जानाः, खाते परितः परिखावलय इव मूलगर्ते कराञ्चलानि निदधानाः, परित्यजन्तः प्रहरणानि, परिहरन्तोऽङ्गुलीयकानि, आबध्नन्तः कटितटेषूत्तरासङ्गं, आरोपयन्तः कङ्कणान्यङ्गदस्थानं, उपवीतयन्तो निवीतलम्बीनि हारमण्डलानि, उद्घोषयन्तः परस्परमसकृदपि 'समं निधत्त कराञ्चलानि, सम्यगुत्तम्भयत, समं विस्रंसयत, समुच्छ्वसित, समं निःश्वसित, समं कुरुत बलानि, परथा विशीर्येयुः शिखराणि, विनमेदयमेव मन्दरः, क्वापि चलेदपि ततो भद्रपीठं चन्द्रापीडस्य, समुद्विजेत दुहिता शैलराजस्य, क्षुभ्येयुः प्रमथाः, कुप्येदपि शैलादिः, चतुरन्तयानगत इव भगवानम्बिकारमणश्चतुरतरमस्माभिर्वाहनीय-' इति वादयत्सु वादित्राणि गन्धर्वेषु, गायन्तीषु गाथाः किन्नरीषु नृत्यन्तीषु निर्जरवारकान्तासु, श्लाघमानेषु चारणेषु, प्रयुञ्जानेष्वाशिषः परमर्षिषु, वर्षत्सु दिव्यबलाहकेषु पुष्पवर्षाणि, हर हरेति तारध्वनिभिरापूरयन्तो विध्यण्डमण्डलमुन्नमयामासुरुर्वीधरं मन्दरम् ।

आपातालनिमग्नमूर्ति नि बलान्मूले समुन्मूलिते
शैलस्यास्य भुजङ्गराजनगरप्रासादशृङ्गायिते ।
खेलन्त्यः शतशः फणीन्द्रसुदृशः स्वच्छन्दमत्रास्पदे
हृप्यद्भिः प्रतिलेभिरे दिविचरैरक्लेशमप्रार्थितम् ॥ ४३ ॥

अपि च—

अभ्यर्णस्थलभाजि तत्र शिखरिण्यामूलमुन्मूलिते
तत्क्षोभक्षुभिते च काञ्चनगिरौ किंचित्समाकुञ्चिते ।
विभ्रश्यद्गृहभित्ति विश्लथपुरद्वारं विशीर्णत्रुट-
त्सौधोत्सेधविटङ्कसंघमजनि स्थानं सुराणां तदा ॥ ४४ ॥

समुद्धृत्य तमारसातलप्रतिष्ठमपि सद्यः समारोपितं कलममिव लीलया प्रस्थिताः दुग्धार्णवं प्रति देवासुराः । अशिथिलशिखरं अप्रकम्पनितम्बं अखण्डितगण्डोपलं अनुज्झितनिर्झरप्रवाहं अस्फुटितपर्यन्तदर्यन्तरं अभञ्जिततरुपुञ्जं अनुत्खातलतावितानं

अस्पन्दमृगवृन्दं अनुद्भ्रान्तशकुन्तं अव्यापन्नपन्नगं अनवसन्नकिन्नरीगानं अस्तब्धसिद्धचारणकोलाहलं अविश्रान्तगान्धर्ववादित्रं अनुपरुद्धतपोधनध्यानं आनन्दयन्तो भगवन्तमुमाकान्तमवहन्त मन्दरम् ।

स च नीयमानः सर्वैरपि सुरासुरैरखिलभुवनाधारस्य पशुपतेरप्याधारतावलेपादिव पादैराचक्राम शिरांसि पर्वतानाम् । परितःस्फुरदच्छनिर्झरापदेशेन प्रत्यक्षमिव विचकार दिङ्मुखेषु यशांसि निर्मलानि । आकाश एव नीयमाने तस्मिन् , अधस्तनीषु दिव्यभूमिषु तासु तासु तपस्यन्तस्तपोधनाः कतिचिदतिचकिताः प्रायुञ्जत परमाशिषः, परिपेठुः स्वस्त्ययनानि, अजपन्नभयङ्करं, आवर्तयन्नमृतमृत्युञ्जयं, अनुदध्युरापदुद्धरणमम्बिकारमणं, आशशंसिरे च बलातिबलाभ्यामश्रमं दिविचराणाम् । महाप्रकाशमणिगणाकीर्णस्य तस्य चलतः पथिवशादागत्य पार्श्वतलमध्वप्रतिरोधात्तत्रैव निलीयमानः पतिरपि त्विषां प्रदीप इव दिवाप्रवर्तितो भग्नतेजा ददृशे । अपि च पुनरक्लेशमानीयमाना पत्या सह कात्यायनी रुचिरान् प्रदेशान् पश्यन्ती विविधानि वस्तूनि परिपृच्छन्ती प्रणयिनमभीक्ष्णं प्रसन्नेन चेतसा स्थापयिष्यतोऽपि गिरिमनुजगृहे देवासुराननुजगृहे ॥

उड्डीय स्वयमुत्पतन् गिरिरसौ वाचैव नेतुं क्षमो
भग्नस्कन्धशिरोधरैर्दिविचरैरित्थं यदद्योह्यते ।
एतत्पर्वतपक्षतिक्षतिकृतो मूर्खस्य दौष्कर्म्यमि-
त्यायस्ताः पथि पर्यभाषिषत ते सर्वे सुपर्वेश्वरम् ॥ ४५ ॥

अपि च—

भग्नो यस्य दशाननः प्रचलने किंचित्प्र[illegible]त्तः पुरा
शक्यं तस्य गिरेः कथं नयनमित्यस्ता[illegible]ुः साधवः ।
अन्ये चक्षमिरे न तद्भवति का श्लाघा[illegible] शाखमृगै-
रानीताश्च निपातिता हि जलधौ शैलाः समूला इति ॥ ४६ ॥

इत्थमतिभारभङ्गुराः सुरासुरा यावदासेदुरन्तिकं दुग्धाम्बुधेस्तावदुद्वेगः श्वेतद्वीपसदामुद-

जृम्भत। 'पश्यत पश्यत पर्यन्ते नीयमानं महागिरिं पातयिष्यते नूनमत्रायमर्णवे, परिप्लावयिष्यते च स निःशेषमिदमन्तरीपं तदद्यैव सज्जीभवत समुत्तिष्ठत सर्वतोऽपि वेलामुच्छ्रयध्वं' इति, हन्त केनेदमुत्प्रेक्षितं बकबन्धकौशलं, किंचिदपि चेदुच्छ्वसिति सागरः किं करणीयमुच्छ्रितयापि वेलया, तदारोक्ष्यामो वयमद्यैव वैकुण्ठमर्कमण्डलं वा धाम त्रिधाम्नः' इति, 'अनुचितमेतदालोचितं, अयुक्तं हि सेवकानामपहाय भगवन्तमन्यत्र गन्तु' मिति, 'किमुच्यते भगवन्तमपहायेति, किं न विचारितं भवता, भगवानेव मन्दरपातदर्शनकुतूहलव्याजेन प्रस्थातुकामो वर्तत इति, कति वारानेष पपात मन्दरः, कतिवारान्नोदजृम्भत सागरः, कस्यापि ब्रह्मणःकल्पे न जानीमो वयं विप्रवासं, अहो खल्वमीभिराधुनिकैर्बाध्यामहे भागवतैः' इति, 'भवतु भवतु कथयन्तोऽपि दृढ मितोऽपि कवलिताः सरिद्भिः सागरैश्च महत्स्वायतनेषु महीगतेषु शार्ङ्गपाणेः कति न भवद्विधाः परमभागवताः, तदास्यतामिहैव भवद्भिः, आधुनिकास्तु वयमज्ञातपारावारा गोपायन्तः क्वचिदात्मानं गोविन्दमेव निरन्तरमनुसन्दधीमहि' इति च विप्रवदतां विविधान्वादान्, पश्यतामसकृदुन्नम्योन्नम्य, परिपृच्छतामागच्छतो वैमानिकान्, परिभ्रमतामभितोऽपि कोलाहलेन महता, पारिषदानामग्रणीः कुपितो विष्वक्सेनो बहिर्निर्गत्य परितोऽपि चक्षुः प्रसारयन्नवलोकयन्नानीयमानमभ्यर्णे एव मन्दरं, अवधारयन्ननुपदमेव तस्य सिन्धौ निपातनं, विज्ञापयामास विनयेन विदितवेदितव्यमपि स्वधर्म इति विश्वंभरम् ।

व्यत्यस्तकौस्तुभमवप्लुतवैजयन्ति
विस्रंसमानकनकाम्बरलोभनीयम् ।
सद्यः फणीन्द्रशयनादुदतिष्ठदीशः
कैलासशैलशिखरादिव कालमेघः ॥ ४७ ॥

दिव्यैःपञ्चभिरायुधैः सविनयैराबद्धसेवाक्रम-
स्तत्कालोपनतैस्तपोधनगणैर्धन्यैर्वृतः कैरपि ।

अभ्यर्णे वसतस्तदा खगपतेरालम्ब्य हस्तं शनैः
विष्वक्सेननिवेद्यमानसरणिर्विश्वंभरो निर्ययौ ॥ ४८ ॥

अथ तमतर्कितोपनिष्क्रान्तमरविन्दनाभमवसरज्ञो विधिरर्धपथे समेत्य सह महर्षिभिर्विविक्तसेवावसरलाभविस्मयानन्दमन्थरः पश्यन्तमचलनिपातकौतुकं परिवार्य केवलमवतस्थे ।

नवकुवलयदामश्यामलस्निग्धमुग्धं
नलिननयनमाद्यं तत्वमालोकयन्तः ।
परिजहुरमरौघाश्चेतसा कार्यभारं
परिजहुरुभये ते पाणिभिः शैलभारम् ॥ ४९ ॥

ततश्च

सुरासुरकरोदरस्खलितशैलमूलस्थल-
स्थितोपलतलाहतिक्षुभितसिन्धुबन्धूत्थितः ।
भ्रमच्चिमितिमिंगिलभ्रमितवालकोलाहलैः
समं निखिलमम्बरं परिववार तारस्वनः ॥ ५० ॥

स्खलदचलसमुद्भवल्लोलकल्लोलकोलाहल-
व्यतिकरबधिरभ्रमत्कूर्मनक्रद्विपक्रन्दितैः ।
स्फुटितकमलजाण्डभाण्डप्रचण्डस्वनोत्प्रेक्षण-
क्षुभितविविधमुक्तहाहारवैश्चाहसीदच्युतः ॥ ५१ ॥

निर्मग्नमन्दरमणिद्युतिसंनदिग्धाः
निष्पेतुरम्बरतले पयसः कणा ये ।
लग्नाश्चिराय लिकुचामलकाभ्रमात्रा-
स्तारास्त एव परिणेमुरिति प्रतीमः ॥ ५२ ॥

पथिगिरिवरादस्माद्धारावसन्नसुरासुर-
प्रतिपदकृतस्कन्धव्यत्यासंसंभ्रमकम्पितात् ।
मणिभिरभितो यस्यां यस्यां भुवि स्खलितं कचि-
त्समजनि खनिः सा सा नाम स्थलेषु जलेषु च ॥ ५३ ॥

अपि च विदूरादम्बरतलादापततोऽस्य महता वेगेन प्रकीर्यमाणे पर्यन्तगते निरवशेषं परिपीयमाने च दरीमुखैरेव परिसरगते पयसि, शून्यमिवार्णवं मन्यमाना नभश्चरा निर्ममज्जुरुभयेऽपि भये । उन्मथितेषु च तन्मूलघट्टनादर्णवचरेषु जन्तुषु. ततः परिभ्रष्टाः करिण एव जलकरिणः, किंनरा एव जलमानुषाः, निर्झरचराः शफरा एव तिमयश्च तिमिङ्गिलाश्च संपेदिरे । अपि च पुनरवगाहमाने रसातलं गिरावभ्य-र्णगतं दुग्धमादायादाय सुखमभिषिञ्चन्तः पारमेश्वरं लिङ्गमभ्यनन्दन्नन्दिमुखा गणाः । ऊर्ध्वमाद्युलोकादुत्पतता च दुग्धपूरेण परिप्लाविता सिद्धनदी बभूव दुग्धनदी । संसिक्ताश्च पयसा मधुरेण सर्वतो नन्दनोद्यानवनपादपास्तदादि सुधामधुराणि सुवते फलानि ।

मज्जन्मन्दरशैलकन्दरपुटव्याघूर्णदर्णोभर-
स्वैरोज्जागरघोषभीषणपयःकल्लोलिनीवल्लभाः ।
खेदस्तम्भितकिंपचानविबुधप्रारब्धभूरिस्तवा
गोविंदस्य कुतूहलं विदधिरे ते केचिदेकक्षणाः ॥ ५४ ॥

मज्जति मज्जति शैले पतति च पततीह कुलमिदं द्युसदाम् ।
शरणं शरणमतस्त्वं शार्ङ्गधरेति प्रचुक्रुशे विबुधैः ॥ ५५ ॥

ततश्चकितसुरासुरस्तोमसंस्तूयमानो भगवानरविन्दलोचनः प्रसादविमलपावनैः परि-वहत्करुणासारसान्द्रितैः कटाक्षैरनुगृह्य, कल्पतरुपल्लवोल्लासिना कैवल्यलक्ष्मीनिवास-मन्दिरेण करारविन्देन तानाश्वासयामास । तत्क्षणं च भूभारभङ्गुरभुजङ्गपुङ्गवभोग-वलयपरिबृंहणादिव कुलिशकर्कशेन शाणनिकृष्टवज्रफलकस्निग्धेन सर्वतोऽप्यशेषभुव-

नात्मनाप्ययुतयोजनमात्रविस्तारशालिना चरमाङ्गेन, पाराशर्यसंक्षेपपरिमितैरनुश्रवैरेव चतुर्भिश्चरणैः, संकोचविकासशीलया माययेव कन्धरया, समस्तागमस्तोममस्तकेनेव च मस्तकेन परमाद्भुतेन समुद्भवन्नवनिगर्भाच्चापमुक्त इव सायकः समग्रेण रंहसा समुत्पपात महान् कमठः ।

प्रत्युद्यत्कमठ कठोर पश्चिमाङ्ग
व्यासङ्गप्रशिथिलमूलसंनिवेशः ।
उत्क्षिप्तः प्रतनुरिवोपलो बलिष्ठै-
रद्रिर्द्रागुदपतदर्णवाद्विदूरे ॥ ५६ ॥

उद्भ्रान्तसागरपयोभररिक्तगर्भ-
पर्यन्तकन्दरगळत्पतनो गिरीन्द्रः ।
मग्नोत्थितः सलिलतो महता श्रमेण
निःसीमनिःश्वासितखिन्न इवाबभासे ॥ ५७ ॥

आलक्ष्य च तदाश्चर्यमानन्दमन्थरेषु वृन्दारकेषु, कृतार्था वयममुनाऽनुग्रहेण किमतः परं करवामेति विज्ञापयत्सु विनयेन गरुडध्वजं, समानयत वासुकिमित्यनुशशास समीपगतश्चतुराननः । ततस्तथेति प्रतिगृह्य शासनं तस्य निर्जिहाना बहिर्निर्जराः समानग्रामा यूयमेव समानयत वासुकिं सान्त्वनेनेति प्रार्थयामासुरसुरवरान् ।

प्रागेव पातालजुषां प्रवृत्तिं
जिज्ञासवो दारकुमारकाणाम् ।
ते मन्दरोद्धारबिलाध्वनैव
सद्योऽवतेरुर्दनुजाः प्रहृष्टाः ॥ ५८ ॥

प्रविशन्तश्च ते ददृशुरतर्कितोद्धूतमन्दरमूलकन्दरोद्भ्रान्तमूर्च्छितपन्नगाश्वासनपरिश्रान्तबन्धुजननिरन्तरं, अर्णवनिमज्जदचलराजसंमर्दनिर्दलदतलवितलादिलोकनिष्पेषघोषभीषिताश्वसदाश्वस्तविहस्तजानपदजनाकीर्णं, अतितुङ्गमुद्गच्छदादिकच्छपनिष्ठुर-

पृष्ठसंघट्टनस्फुटितशैलशिलाभङ्गसमुच्चलदभङ्गुरस्फुलिङ्गपरिष्वङ्गदंदह्यमाननगरग्रामपल्ली-निवेशं निरन्तरोत्पातधारानिरीक्षणसाध्वसेन पतिष्यति नाम भूतलं, चलिष्यति नाम सुमेरुः, स्फुटिष्यति नाम विध्यण्डकपालं, प्रवेक्ष्यति नाम सागरः, परित्यक्ष्यति नाम शेषो भुवनभारमित्यसंभावितमूलमनुक्षणमुच्चलन्तीभिः किंवदन्तीभिः समाकुलमभितो रसातलम् । समागम्य ते वासुकिं सभाजिता यथोचितं समावेद्य सागरमथन संरम्भम्, अनुपदमेव कथान्ते कथयमासुः शनैरेव भवितव्यं भवता मन्दरवेष्टनदाम्नेति । अनुमोदमानो वचनममीषामाह च स्मेदमुरगपतिः—अहो चिराय मया श्रुतोऽयमभ्युदयो भ्रातृजनस्य । यत्किल समागम्य दैतेयैरादितेयाः साधयन्ति मनीषितम् । तत्र स्वयमनियुक्तैरपि काद्रवेयैर्भ्रातृभिस्तत्साहायकमाचरितव्यमिति न्याय एव चोदयति अत्र किमावेदनेन भवताम् । परं तु—

मूले वालधिमग्रतः सुरगिरेर्मौलिं च मे बध्नता
कल्पे प्राचि पिनाकिना भगवताकृष्टोऽस्मि यल्लीलया ।
तत्कालश्लथसन्धिबन्धपरिवृत्तास्थीनि मर्माणि ता—
न्यद्यापि स्मितजृम्भितक्षवथुषु स्वाच्छन्द्यमुच्छिन्दते ॥ ५९ ॥

अपि च—

यस्तल्पेष्वपि कोमलेषु शयितुं शक्नोमि नाश्मस्विव
त्यक्त्वा कुण्डलतां स्वपन्नपि च यो नायन्तुमद्योत्सहे ।
पाषाणद्रुमगुल्मकण्टकदरीकूटप्रपातोद्भटं
सोऽहं वेष्टयितुं क्षमः किमचलं गात्रैर्जराजर्जरैः ॥ ६० ॥

तदद्य किंचिदनुगृह्य मां नयन्तु भवन्तस्तक्षककार्कोटकशङ्खचूडगुळिकैरावतपद्म-मुखान् महात्मनस्तरुणान् फणाधरान्, अन्ततो नयत जितश्रमं वा शेषं' इत्यभिदधानो वासुकिः पुनरित्थमभिदधे दानवैः ॥

क्षुद्रैः किं करणीयमेभिरुरगैः क्षीणायुषामन्तकै
र्या शेषं नयतेति वागजनि ते सैवास्तु सत्याधुना ।
भूभारे ह्युपयुक्त एष विदितः सर्वैस्ततोऽन्यः पुन-
स्त्वं शेषो भवसीति निश्चितधियस्त्वामेव याचामहे ॥ ६१ ॥

अपि श्लक्ष्णीकुर्मो मणिवदचलं पाणिकषणै-
रपि त्वां वोढास्मः सुखशयितमादुग्धजलधेः ।
सुखं चाकर्षामस्तदुपरि यथा तुष्यति भवान्
प्रसीदायच्छस्व प्रचल शनकैः प्राप्नुहि यशः ॥ ६२ ॥

किं वहुना । प्रातवेशिका वयं भवतः परिचितहृदयाश्च चिरसंवासेन । ततस्तत्व-मेतदवधार्यताम्—

महद्भिर्ग्रथ्नीमः स्रजमजगरैर्मन्दरचरै
र्मरुद्भिर्वा पाशैर्भ्रमयितुमलं स्तब्धमचलम् ।
कराग्रैर्मथ्नीमो जलधिमथवा किं क्षरति नो
यशस्तूद्गातु ते पुनरपि वदामः पुनरपि ॥ ६३ ॥

इति प्रार्थितो दानवैरनुत्तरो भुजगपतिः प्रस्थातुकामो वलयमेकमुत्सृजन्यावदुत्तस्थौ, तावद्दर्णामथनक्षोभशङ्कितपतनामवनीं धारायितुमवस्थापितः स्वयंभुवा वज्रस्तम्भ इव संददृशे ।

ततः प्रतिष्ठध्वमित्यनुज्ञाय दानवान्, प्रसारयन् मन्दरोद्धाररन्ध्राभिमुखं मुखं, अनुवृत्तस्तक्षकादिभिः, अनुमतो भूभारवहननिश्चलेन भगवता शेषेण, शनैः शनैः शिथिलीचकार भोगवलयान् ॥

अथ तेन बिलाध्वना विशन्तं
पवनं पार्थिवगन्धसारसान्द्रम् ।

प्रथमे पथि विश्रमे फणीन्द्राः
पपुराकण्ठमयाचितोपपन्नम् ॥ ६४ ॥

ततः प्रपात इव परिहृतनिम्नोन्नते तस्मिन् बिलद्वारे महता यत्नेन मन्दमन्दमुत्सर्पन्तो दशयोजनं, अधःपतन्तः शतयोजनं, आरुरुक्षन्तः पुनः, अवेक्षमाणानि निम्नोन्नतानि फूत्कुर्वन्तो भूयसा यावदश्राम्यन्ननिलाशनाः, तावत्करावलम्बनप्रदानापदेशेन परिघतोमरगदाप्रासादिभिः प्रहरणैः प्रकल्पयन्त इव सोपानानि, परिकर्षयन्तः शनैः शनैरिव प्रापयामासुरवनितलं फणाधरानसुरेश्वराः ॥

आपातालात्फणधरपतेरा च मूलात्सुमेरो
रद्राक्षुस्ते स्तिमितपतितं भोगमायासयोगात् ।
मन्थानाद्रेरवनिवलयादुद्धृतस्यातिवेगा
दन्तर्लग्नं त्रुटितघटितं मूलमेकं भुवीव ॥ ६५ ॥

अथ कथंचिदाश्वस्तमहिपुङ्गवमालक्षयन्तो दानवा नगनगरग्रामनदनदीनदीशसंतानदन्तुरेण भौमेन यथा परिक्रमणमावेद्य मान्यहेतुं, आसाद्य तदनुज्ञां, आफणामण्डलादा च वालमूलादुद्धृत्य कराञ्चलैर्युगपदुपनिवेशयन्तः स्कन्धेषु तं, अपरान् पुनर्महोरगानङ्गुलीभिरङ्गुलीयकानीव, पादैर्नूपुराणीव, पाणिभिः कङ्कणानीव, कटिभिः कटिसूत्राणीव, वक्षसा हारवलयानीव वहन्तो लीलया तारापथेन पथा दुग्धोदधिमभिप्रतस्थिरे ॥

दूरादलक्ष्यत सुरैर्दनुजांसलग्ना
द्राघीयसी भुजगपुङ्गवभोगरेखा ।
तिर्यक्प्रवाहमुपयातवतीव दिष्ट्या
मन्दाकिनी निपतिता शिखरे हिमाद्रेः ॥ ६६ ॥

पायं पायं पवनमभितः स्थौल्यमापद्यमानं
वाहं वाहं फणधरपतिं विश्लथस्कन्धबन्धाः ।

प्रत्युद्यातैः सुरपरिवृढैर्भारविश्रान्तिहेतोः
सार्धं दैत्या भुवि निदधिरे संनिधौ शार्ङ्गपाणेः ॥ ६७ ॥

अथ शिथिलांसमांसलितखेदविनोदकृते
परिकलिताङ्गभङ्गमभितोऽपि वपुर्धुवताम् ।
करचरणोदराङ्गुलि भुजान्तरकन्धरतो
भुविभुजगा निपेतुरितरे विबुधद्विषताम् ॥ ६८ ॥

खर्वोन्नतासुरस्कन्धसंधारणकृतां व्यथाम् ।
वीजितो विबुधैर्दैत्यैर्विजहौ वासुकिः शनैः ॥ ६९ ॥

परिश्राम्यतश्च वासुकेरतिवेलश्वासनिःश्वासपरम्परापरिणमदुपचयापचया परिणतशर-काण्डपाण्डरा च भोगयष्टिरभिपूरयितुं दुग्धसागरमापतिता विदूरादुच्छङ्खलतरङ्ग-मालःसमाकुलास्तव्धव सिद्धनदी सुरासुरैरालुलोके ॥

क्षितिधरपरिपातक्षुभ्यदम्भोधिगर्भ
प्रचलदमृतबिन्दुस्यन्दसान्द्रैः समीरैः ।
फणिपतिरपनीतस्वेदखेदो ददर्श
त्रिजगदनभिवेद्यं देवमाद्यं मुकुन्दम् ॥ ७० ॥

प्रणिपतन्नथ वासुकिः फणामणिप्रकाशधारानीराजनैराराधयामास चरणारविन्दमर-विन्दनाभस्य, आह चेदं 'भगवन् अशिक्षितोऽस्मि शेष इव व्याकरणे, अनभियुक्तोऽस्मि पद्म इव पाञ्चरात्रे, अकृतश्रमोऽस्मि कम्बलाश्वतराविव गान्धर्वे, केवलमहं भगवतो मेरुधन्वनः सायकसंधानावसरसंपन्नं भवतश्चरणारविन्दविन्यासभाग्यं परिशीलयन्नान्तरेण करणेन, परिपालयन् भवच्छासनं आकांक्षन् भवतो नियोगानुग्रहमासे भवदधीनः' इति । तदनु च

किं तन्त्रैः किं मन्त्रैः किं व्याकरणेन किं पुराणेन ।
चरणाम्बुजे निमग्ना धिषणा यदि पद्मनाभस्य ॥ ७१ ॥

इति स्तूयमानमब्जसंभवादिभिरिन्दिरारमणो वासुकिमिदमवादीत्– 'वत्स, वासुके न वक्तव्यमिदं त्वया। परिजानतैवहि भक्तिमियतीमपि मया प्रतिष्ठापितोऽसि प्रथम भुवनाधिपत्ये। तदिदानीं माहेश्वरं धनुरनुस्पृश्य संपादितं यशो माहेश्वरं गिरिमिमं प्रदक्षिणीकृत्य परिवर्धयेत्यादिशामि।

तेजसाप्यायायिष्यामि दिव्येन त्वामसंशयम्।
कामं वेष्ट्य मन्थाद्रिं कर्षन्तु त्वां सुरासुराः ॥ ७२ ॥

इति दत्तवरो वासुकिरिन्दिरारमणेन, परितोषयन् सुरासुरान्, पश्यत्सु वैमानिकेषु, समुत्प्लुत्य वेगेन, सद्यःकृत्तविद्रुमकाण्डवत्संवेष्टयामास भोगेन मन्दरगिरेराभोगम्॥

प्रणमन्तः स्तुवन्तश्च भगवन्तं जनार्दनम्।
ववल्गुश्च जगर्जुश्च वासवाद्याः सुरासुराः ॥ ७३ ॥

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभ श्रीकण्ठमतप्रतिष्ठापनाचार्य चतुरधिक
शतप्रबन्धनिर्वाहक श्रीमन्महाव्रतयाजि श्रीमदप्पयदीक्षितसोदर्य
श्रीमदच्चान्दीक्षितपौत्रेण नारायणदीक्षितात्मजेन श्रीभूमिदेवीगर्भसंभवेन
श्रीनीलकण्ठदीक्षितेन विरचिते
श्रीनीलकण्ठविजये चम्पूकाव्ये तृतीय आश्वासः ॥

ಟಿಪ್ಪಣಿ ಇತ್ಯಾದಿ

1. नानाविधिभिः = नानामार्गैः
शरणे साधु तम् शरण्यम्
शशं धारयतीति शशधरः तस्य कला उत्तंसे शीर्षे यस्य तम् शिवम्।
सन्धातुमिच्छन्तः सन्धित्सन्तः। दूतस्य कर्म दूत्यम्।
आवृणुत = ಆರಿಸಿದರು.

2. अवमेऽपि कर्मणि = ಕೀಳಾದ ಕೆಲಸದಲ್ಲಿ.

पुरोधाः = पुरोहितः न विद्यते अन्यं साधनं येषां ते अनन्यसाधनाः (देवाः)

3. अन्वय — राजानः (यं) पुरुषं यत्र राजकीये (कर्मणि) नियुञ्जते, तस्य (पुरुषस्य) तत् (राजकीयं) कर्म कीर्तिदं, तत् (कर्म) अलभ्यं यत् कर्म ईप्सितं ।

4. च + आतलम् ತಳದವರೆಗೂ.

गाधताम् = गभीरताम् अवगाहन्ते = प्रारभन्ते

गद्य— वैश्रवणेन = कुबेरेण समापितः = हतः ।

5. च्यावयितुम् = ಉರುಳಿಸಲು सर्वसुनिर्वृताः = ಎಲ್ಲಾ ವಿಧದಿಂದಲೂ ಸುಖಿಗಳು.

6. प्राभृतयेम = ಕಾಣಿಕೆಯಾಗಿ ಒಪ್ಪಿಸೋಣ.

गद्य—विहस्तेषु = ಕಲಕಿದ ಮನಸ್ಸುಳ್ಳವರಾಗಿ. कृतमुखः = कुशलः ; वैज्ञानिकः कृतमुखः कृती कुशल इत्यपि इत्यमरः ।

7. तिस्रश्च ताः जगत्यश्च त्रिजगतीनां वाग्गर्वं सर्वं कषतीति = त्रिजगतीवाग्गर्वसर्वङ्कषः ।

प्रति समाधातुम् = ಉತ್ತರಿಸಲು.

9. प्रतिहतं वचनम् येन सः = प्रतिहतवचनः

प्रतस्थे —'संमवप्रविभ्यः स्थः ಎಂಬ ಸೂತ್ರದಿಂದ ಆತ್ಮನೇ ಪದ ಬಂದಿದೆ.

10. सङ्घटयितुम् = ಒಟ್ಟುಗೂಡಿಸಲು अत्यर्घः = ಅಮೂಲ್ಯ.

11. ಭೃಗು ಮತ್ತು ಅಂಗಿರಸರು ಬ್ರಹ್ಮನ ಕುಲದಲ್ಲಿ ಮೊದಲಿಗರು. ಅಂಗಿರಸರಾದ ಬೃಹಸ್ಪತಿಗಳು ಭಾರ್ಗವರಾದ ಶುಕ್ರಾಚಾರ್ಯರ ಮನೆಗೆ ಕಾರ್ಯಾರ್ಥಿಯಾಗಿ ಬಂದರು. ಪರಸ್ಪರ ಸೋದರರು (ಜ್ಞಾತಿಗಳು) ಒಂದೆಡೆ ಸೇರಿದರೆ ಏನಾಶ್ಚರ್ಯ ?

12. श्रावं श्रावम् ಇಲ್ಲಿ आभीक्ष्ण्ये-णमुल् ಪ್ರತ್ಯಯವು ಬಂದಿದೆ.

हृदयं च हृदयं च हृदये

13. जानीते — जानाते — जानते

जानीषे — जानाथे — जानीध्वे

जाने — जानीवहे — जानीमहे

परीणाहम् = ಮಹತ್ವ. सुपर्वा = ದೇವ.

14. मीमांसकैः = ವಿಚಾರಶೀಲರಾದ.

गद्य—संमुखी करिष्यामि = ಎದುರುಗೊಳ್ಳಿಸುತ್ತೇನೆ. उपच्छन्द्य = ಸಮಾಧಾನ ಪಡಿಸಿ. सोत्प्रासं = ನಗುತ್ತಾ.

पुण्यः श्लोकः (कीर्तिः) यस्य सः पुण्यश्लोकः

17. परिवृढः = ಪರಾಕ್ರಮಿ, ಪ್ರಚಂಡ. अनुजन्मा = ತಮ್ಮ.

19. प्रवेकः = ಉತ್ತಮ. पारिषदाग्रणीः = ಭಕ್ತಾಗ್ರೇಸರ.

20. ददति लट् प-पद

ददाति — दत्तः — ददति

ददासि — दत्थः — दत्थ

ददामि — दद्वः — दद्मः

समुद्रमयन्ति = ಮೇಲೇರಿಸುತ್ತಾರೆ.

23. गुरुभार्गवयोर्मौढ्ये शुभं किंचिन्न सिध्यति

ಗುರು ಶುಕ್ರರ ಅಸ್ತ ಸಮಯದಲ್ಲಿ ಮಾಡಿದ ಯಾವ ಶುಭಕಾರ್ಯಗಳೂ ಫಲಿಸುವುದಿಲ್ಲ. ಎಂಬುದನ್ನು ಗಮನಿಸಬೇಕು.

25. गताः श्रियः येषां ते संमेनिरे = ಒಪ್ಪಿಕೊಂಡರು.

26. शम एव धनं यस्य सः — शमधनः तस्य गिरा = ಬೃಹಸ್ಪತಿಯ ಮಾತಿನಂತೆ निर्व्यलीकं = ತಪ್ಪಭಿಪ್ರಾಯವಿಲ್ಲದಿದ್ದಲ್ಲಿ.

27. समनीनहत् = ಸನ್ನಾಹಮಾಡಿದನು.

गद्य—अवधानेन = ಎಚ್ಚರಿಕೆಯಿಂದ. दुर्विशङ्कितानि = ದುರಾಲೋಚನೆಗಳನ್ನು अनुयात्रिकान् = ಪರಿವಾರದವರನ್ನು.

न्यायमनतिक्रम्य यथान्यायम् ।

32. अनुमन्यामहेतराम् = अतिशयेन अनुमन्यामहे ।

गद्य — आख्यातु = कथयतु अनुयुंजानेषु = ಪ್ರಶ್ನಿಸಲಾಗಿ उत्पाट्य = ಕಿತ್ತು. विधमामः = ಉರುಳಿ ಬಿಡೋಣ समुद्धरामः = ಮೇಲೆತ್ತುತ್ತೇವೆ उत्सेकः= ಗರ್ವ उच्चावचम् = ಗೊತ್ತು ಗುರಿಯಿಲ್ಲದೆ ಮಾತಾಡುವುದು

33. ಪೂರ್ವಕಥೆ—ಹಿಂದೆ ರಾವಣನು ಕೈಲಾಸ ಪರ್ವತವನ್ನು ತನ್ನ ತೋಳುಗಳಿಂದ ಎತ್ತಲು ಪ್ರಯತ್ನಿಸಿದನು. ಆಗ ಪಾರ್ವತಿ ಪರಮೇಶ್ವರರು ವಿಹರಿಸುತ್ತಿದ್ದರು. ಕೋಪ ಗೊಂಡ ಶಿವನು ಬಲವಾಗಿ ಕಾಲಿನಿಂದ ಅದುಮಿದರು. ಕೈಗಳು ಸಿಕ್ಕಿಕೊಂಡು ವ್ಯಥೆ ಗೊಂಡ ರಾವಣನು ಗೋಳಾಡಿ ಭಕ್ತಿಯಿಂದ ಪರಶಿವನನ್ನು ಧ್ಯಾನಿಸಿದನು. ಆಗ ಶಿವನು ಕಷ್ಟದಿಂದ ಅವನನ್ನು ಪಾರುಮಾಡಿ ರಾವಣ ಎಂದು ಕರೆದನು.

रावयतीति रावणः

गद्य— कृता संवित् (प्रतिज्ञा) यैः ते (कृतसंविदः) ದೇವಾಸುರರು. अस्तौत्—अष्टुतां - अस्तुवन् ।

35. अचलधनुर्धरायः मेरुधन्वने ಶಿವನಿಗೆ

ತ್ರಿಪುರಾಸುರರ ಸಂಹಾರ ಕಾಲದಲ್ಲಿ ಶಿವನು ಮೇರು ಪರ್ವತವನ್ನೇ ಧನುಸ್ಸನ್ನಾಗಿ ಮಾಡಿಕೊಂಡನು.

36. 'शिवस्तु करुणासिंधुः ध्यायन्नास्ते जगच्छिवम्' इति प्रसिद्धिः ।

गद्य—समनह्यन् = ಸನ್ನದ್ಧರಾದರು.

38. विनिघ्नन्तः = ಒಡೆಯುತ್ತ  विचलयन्तः = ಅಲ್ಲಾಡಿಸುತ್ತಾ
उद्स्यन्तः = ಎಬ್ಬುತ್ತ.

जगृहे — लिट् — आ पद

गद्य—चरलग्नम् ಲಗ್ನಗಳಲ್ಲಿ ಚರ, ಸ್ಥಿರ, ದ್ವಿಸ್ವಭಾವ ಎಂದು ಮೂರು ವಿಧ. ಅವುಗಳಲ್ಲಿ ಚರಲಗ್ನವನ್ನೇ ನಿರೀಕ್ಷಿಸುತ್ತ

39. अक्रृत लुङ्

49. स्तोकम् = ಅಲ್ಪ  समीरः = ಗಾಳಿ

41. व्यवसिता धीः येषां ते—व्यवसितधियः

गद्य— उत्तरासङ्गम् = ಉತ್ತರೀಯ.

43. फणीन्द्रसुदशः = ನಾಗಕನ್ನಿಕೆಯರು.

44. अभ्यर्ण = ಸಮೀಪ.  विटङ्कसङ्घः = ಪಾರಿವಾಳಗಳ ಗುಂಪು.

गद्य - आरसातलप्रतिष्ठम् = ಪಾತಾಳದವರೆಗೆ ವ್ಯಾಪಿಸಿದ್ದರೂ  वादित्रं = ನಾಲ್ಕು ವಿಧವಾದ ವಾದ್ಯಗಳು.

'चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम्' इत्यमरः अन्तरीपम् ದ್ವೀಪ.

बकबन्धकौशलम्—ಬಕಪಕ್ಷಿಯನ್ನು ಹಿಡಿಯುವುದು ಸುಲಭವಲ್ಲ. ಅದನ್ನು ಹಿಡಿಯಲು ಬೆಣ್ಣೆಯನ್ನು ತಂದು ಅದರ ತಲೆಯ ಮೇಲೆ ಇಟ್ಟರೆ ಅದು ಕರಗಿ ಅದರ ಕಣ್ಣಿಗೆ ಇಳಿಯುವುದು. ಆಗ ಅದಕ್ಕೆ ಕಣ್ಣು ಕಾಣದಂತಾಗುವುದು, ಆಗ ಹಿಡಿಯಬಹುದು. ಅಂದರೆ ಅದರ ತಲೆಯ ಮೇಲೆ ಬೆಣ್ಣೆಯನ್ನು ಇಡುವವರಾರು ? ಹೇಗೆ ? ಅದೇ ಸಮಸ್ಯೆ.

48. पञ्चभिः आयुधैः = ಐದು ಆಯುಧಗಳಿಂದ.

१) शङ्खः = ಪಾಂಚಜನ್ಯ  २) चक्रम् = ಸುದರ್ಶನ  ३) गदा = ಕೌಮೋದಕೀ  ४) खड्गः = ನಂದಕ  ५) धनुः = ಶಾರ್ಙ್ಗ.

49. परिजह्नुः = ಇಳಿಸಿದರು.

53. भारावसन्नः = ಭಾರದಿಂದ ಕುಗ್ಗಿದ.

गद्य— सूते — सुवाते — सुवते

सूषे — सुवाथे — सूध्वे

सुवे — सूवहे — सूमहे

चरमांगेन = ಬೆನ್ನಿನಿಂದ.

57. मग्नश्चासावुत्थितश्च मग्नोत्थितः ।

59. ಹಿಂದೆ ಶಿವನು ವಾಸುಕಿಯನ್ನೇ ಮೌರ್ವಿಯನ್ನಾಗಿ ಮಾಡಿಕೊಂಡು ಮೇರುವನ್ನೇ ಬಿಲ್ಲನ್ನಾಗಿ ಮಾಡಿಕೊಂಡು ವಾಸುಕಿಯ ಬಾಲವನ್ನು ಒಂದು ತುದಿಗೂ, ತಲೆಯನ್ನು ಮತ್ತೊಂದು ತುದಿಗೂ ಬಿಗಿದು ಕಟ್ಟಿದನು.

स्मितजृम्भितक्षवथुषु = ನಗುವಾಗ, ಆಕಳಿಸುವಾಗ, ಸೀನುವಾಗ

स्मितं च जृम्भितं च क्षवथुश्च प्रातिवेशिकाः = ನೆರೆಯವರು

63. श्रथ्नाति — श्रथ्नीतः — श्रथ्नन्ति

श्रथ्नासि — श्रथ्नीथः — श्रथ्नीथ

श्रथ्नामि — श्रथ्नीवः — श्रथ्नीमः

लट् — प — पद

66. द्राघीयसी = ಉದ್ದವಾದ.

67. पायं पायम् वाहं वाहम् ಇಲ್ಲಿ आभीक्ष्ण्ये णमुल् ಸೂತ್ರದಿಂದ णमुल् ಪ್ರತ್ಯಯವು ಬಂದಿದೆ.

73. ववल्गुः = ಚಲಿಸಿದರು जगर्जुः = ಗರ್ಜಿಸಿದರು.

# (ಇ) ಚಂಪೂ ಭಾರತಂ

## ಕವಿ ಕಾವ್ಯ ವಿಚಾರ

दिगन्तरलुठत्कीर्तिरनन्तकविकुञ्जरः ।
प्राणैस्तुल्यं सरस्वत्याः प्राणैषीच्चम्पुभारतम् ॥

"वाचामनन्तसुकवेर्वसुधैव मूल्यम्"

ಈ ಅಗ್ಗಳಿಕೆಯ ಮಾತುಗಳನ್ನು ಚಂಪೂಭಾರತದ ಕೊನೆಯಲ್ಲಿ ಕಾಣುತ್ತೇವೆ. ಈ ಮಾತುಗಳಿಂದ ಚಂಪೂಭಾರತದ ಕವಿ ಅನಂತನೆಂದೂ, ಅವನ ಕೀರ್ತಿ ದಿಗಂತವಿಶ್ರಾಂತ ವಾಗಿತ್ತೆಂದೂ, ಆ ಕೃತಿ ಸರಸ್ವತಿಯ ಪ್ರಾಣಕ್ಕೆ ಸಮವಾದುದೆಂದೂ, ಅನಂತನ ಕವಿತೆಗೆ ವಸುಧೆಯೇ ಮೂಲ್ಯವೆಂದೂ ತಿಳಿದುಬರುತ್ತದೆ. ಇದನ್ನು ಕವಿಯೇ ಹೇಳಿದ್ದಾನೆಯೋ ಅಥವಾ ಬೇರೆ ಯಾರಾದರೂ ಪ್ರಶಂಸೆಗಾಗಿ ಸೇರಿಸಿದ್ದಾರೆಯೋ ನಿರ್ಧರಿಸುವುದು ಕಷ್ಟ. ಇವನ ಇತರ ಯಾವ ಗ್ರಂಥಗಳೂ ಲಭಿಸುತ್ತಿಲ್ಲ. ಈ ಗ್ರಂಥದ ಯಾವೆಡೆಯಲ್ಲಿಯೂ ಕವಿಯು ತನ್ನ ವಿಷಯ ವಾಗಿ ಪ್ರಸ್ತಾಪಿಸಿಲ್ಲ. ಆದುದರಿಂದ ದೇಶ ಕಾಲಗಳ ಬಗ್ಗೆ ವಿಮರ್ಶಕರಲ್ಲಿ ಒಮ್ಮತವಿಲ್ಲ ಬಹುಶಃ ಇವನ ಕಾಲ ಕ್ರಿ.ಶ. 16ನೇ ಶತಮಾನವಿರಬಹುದು. ಅವನು ಆಂಧ್ರದೇಶದವನು ಎಂಬ ಬಗ್ಗೆ ಒಂದು ದಂತ ಕತೆಯುಂಟು.

ಅನಂತಭಟ್ಟ ಆಂಧ್ರದೇಶದ ಒಬ್ಬ ಮಹಾಕವಿ ಆವನ ಪತ್ನಿ ಅವನಂತೆಯೇ ಪ್ರತಿಭಾವಂತೆ ಕವಿಯು ಒಮ್ಮೆ ಏಕಾಕಿಯಾಗಿ ತೀರ್ಥಯಾತ್ರೆ ಮುಗಿಸಿ ಮನೆಗೆ ಬರುತ್ತ ತನ್ನ ಸತಿಯನ್ನು ಕುರಿತು 'ಎಲ್ಲೆ ನಿನಗೊಂದು ಅಪೂರ್ವ ವಸ್ತುವನ್ನು ತಂದಿದ್ದೇನೆ ಸ್ವೀಕರಿಸು' ಎಂದು ತಾನು ರಚಿಸಿದ ಚಂಪುಭಾರತವನ್ನು ಆಕೆಗೆ ಕೊಡಲು ಇಚ್ಛಿಸಿದನಂತೆ. ಆದರೆ ಅದನ್ನು ಕೇಳುತ್ತಲೇ ಮಹಾಸತಿಯೂ ಬುದ್ಧಿವಂತೆಯೂ ಆದ ಆಕೆ ತನ್ನ ಪಾತಿವ್ರತ್ಯ ಪ್ರಭಾವದಿಂದ ಅದನ್ನು ಕುರಿತು "ಪೂಜ್ಯರೇ, ಆ ಚಂಪೂಭಾರತದ ಕಡೆಯ ಪದ್ಯದಲ್ಲಿ ದಿಗಂತರ ಲುಠತ್ಕೀರ್ತಿಃ ಎಂದೇ ರಚಿಸಿದ್ದೀರಿ ? ಲಸತ್ಕೀರ್ತಿಃ ಎಂದು ಸೇರಿಸಬಾರದೆ ಎಂದಳಂತೆ. ಅನಂತನು ಚಕಿತನಾದನಂತೆ.

ಇದು ಒಂದು ಚಮತ್ಕಾರವಾದ ಕತೆಯೇ ಹೊರತು ಇದರಿಂದ ಯಾವ ವಿಶೇಷ ವಿಷಯ ಗಳೂ ತಿಳಿದುಬರುವುದಿಲ್ಲ.

ಸಾಮಾನ್ಯವಾಗಿ ಚಂಪೂಗ್ರಂಥಗಳ ಉದ್ಗಮ ದಕ್ಷಿಣಭಾರತದಲ್ಲಿಯೇ. ಕನ್ನಡದಲ್ಲಿ ಕ್ರಿ.ಶ. 10ನೇ ಶತಮಾನದ ವೇಳೆಗೆ ಸಾಕಷ್ಟು ಚಂಪುಗ್ರಂಥಗಳು ಪ್ರಕಾಶಕ್ಕೆ ಬಂದಿದ್ದುವು. ಕನ್ನಡದ ಕಂಪು, ಇಂಪು, ಸೊಂಪು ಮುಂತಾದ ಶಬ್ದಗಳಂತೆ ಚಂಪು ಎಂಬ ಶಬ್ದವೂ ಬಳಕೆಗೆ ಬಂದಿರಬಹುದೆಂದು ವಿಮರ್ಶಕರ ಅಭಿಪ್ರಾಯ. ಸಂಸ್ಕೃತದಲ್ಲಿ ಕ್ರಿ.ಶ. 10ನೇ ಶತಮಾನದ

ತ್ರಿವಿಕ್ರಮನ ನಳಚಂಪುವೇ ಈಗ ಸಿಕ್ಕಿರುವ ಚಂಪುಗ್ರಂಥಗಳಲ್ಲಿ ಮೊದಲನೆಯದು. ಆ ಕವಿ ಕರ್ನಾಟಕದವನೆಂದು ಹೇಳುವರು. ಕ್ರಿ.ಶ. 11ನೇ ಶತಮಾನದ ರಾಮಾಯಣ ಚಂಪು 16ನೇ ಶತಮಾನದ ಭಾರತಚಂಪು, ನೀಲಕಂಠವಿಜಯ ಚಂಪು ಮತ್ತು ಭಾಗವತ ಚಂಪುಗಳು ಪ್ರಖ್ಯಾತ ವಾದವು.

ಮಹಾಭಾರತದ ಕತೆಯು ಈ ಚಂಪುಭಾರತದ 12 ಸ್ತಬಕಗಳಲ್ಲಿ ಅಡಕವಾಗಿದೆ. ಈ ಗ್ರಂಥವು ಕವಿಯ ಪಾಂಡಿತ್ಯ ವೈದಗ್ಧ್ಯಗಳಿಗೆ ಸಾಕ್ಷಿಯಾಗಿದೆ. ಗದ್ಯಪದ್ಯಮಿಳಿತ ದೀರ್ಘಸಮಾಸ ಗಳು ಹೇರಳವಾಗಿವೆ. ಉಪಮಾ, ರೂಪಕ, ಉತ್ಪ್ರೇಕ್ಷಾ, ಶ್ಲೇಷ, ಪರಿಸಂಖ್ಯಾ, ಪರ್ಯಾಯೋಕ್ತ ಮುಂತಾದ ಅರ್ಥಾಲಂಕಾರಗಳೂ, ಯಮಕ ಅನುಪ್ರಾಸಾದಿ ಶಬ್ದಾಲಂಕಾರಗಳೂ ಪುಂಖಾನು ಪುಂಖವಾಗಿ, ಸಂದರ್ಭೋಚಿತವಾಗಿ ಯೋಜಿಸಲ್ಪಟ್ಟಿವೆ. ಕವಿಗೆ ಹೇಳುವ ವಿಷಯವನ್ನು ಪರ್ಯಾಯವಾಗಿ ಹೇಳುವುದರಲ್ಲಿ ವಿಶೇಷವಾಗಿ ಅಭಿರುಚಿ. ಮೊದಲ ಮಂಗಳ ಪದ್ಯದಲ್ಲಿಯೇ ಪ್ರತ್ನಂ ವೇತಂಡರತ್ನಂ ಕಲ್ಯಾಣಂ ವೋ ವಿಧತ್ತಾಮ್ ಎಂದು ಕವಿಯು ಹೇಳುವನೇ ಹೊರತು ಗಣೇಶಃ ಎಂದು ವಾಚ್ಯವಾಗಿ ಹೇಳುವುದಿಲ್ಲ. ಗ್ರಂಥದ ಯಾವೆಡೆಯಲ್ಲಿಯೂ "ಕೊಂದನು" ಎಂಬ ಶಬ್ದವನ್ನೂ ನೇರವಾಗಿ ನುಡಿಯುವುದಿಲ್ಲ. ಪರ್ಯಾಯವಾಗಿ ತಿಳಿಸುವನು. ಇವನ ಗದ್ಯದಲ್ಲಿಯೂ ಶಬ್ದಾಲಂಕಾರಗಳ ಸೊಗಸು ಮೂರ್ತಿಮತ್ತಾಗಿದೆ.

## इ. चम्पूभारतम् — चतुर्थः स्तबकः

### मङ्गलश्लोकः

कल्याणं वो विधत्तां करटमद धुनीलोलकल्लोलमाला-
खेलल्लोलम्बकोलाहलमुखरितदिक्चक्रवालान्तरालम् ।
प्रत्नं वेतण्डरत्नं सततपरिचलत्कर्णतालप्ररोह-
द्वाताङ्कराजिहीर्षादरविवृतफणाशृङ्गभूषा [भु]जङ्गम् ॥

§ § §

याते ततो निजपुरीं यदुवंशके[तौ]
राज्ञे मयो मणिसभां रचयांब[भूव] ।
यस्या रुचं समवलोक्य शुचा[पि] नापि
जीवं गतागतजुषं वहते सुय[ोधनः] ॥ १ ॥

तामधिष्ठास्नुमभ्येत्य तं मखं कर्तुमन्त्रशात् ।
विपञ्चीरवसारज्ञो नृपं चीरवसां वरः ॥ २ ॥

ततो दूताहूतः पुरुहूतानुजो निरन्तरायमेव सप्ततन्तुमुपहर्तुमनसः कौन्तेयस्योपान्ते रहसि मुहूर्तं संमन्त्र्य साक्षादुत्साहप्रभावाभ्यां मूर्तौ मन्त्र इव तत्प्रहिताभ्यां गन्धवहसुधान्धोधिपनन्दनाभ्यामनुसन्धीयमानगमनो नदीतटाकैर्द्रिमातृकतया स्वपालयितारमनुकुर्वतो विविधान्यदुर्लभवसुधान्यसमेधितवसुधान्मगधानवगाह्य विशृङ्खलामोदित गिरिव्रजमपि शृङ्खलाखेदितमहीभृत्कुलं जराघटितदेहमपि देदीप्यमानबलसंपन्नमाशाजेतारमपि परार्थापहाराजागरितारं मागधमपि विगीतव्यापारं द्वैमातुरं महारथं जरासन्धं पृथिवीनाथमेत्य प्रधनं ननाथ ॥

तत्क्षणमतितितिक्षया 'त्वमष्टादशकृत्वो दृष्टापजयोसि, अयं पुनरितरः किशोरः' इति कृष्णावुभावप्यवधीर्य हिडिम्बबककुटुम्बशोकोदयादारभ्य प्रवीरजनकर्णिकामौक्तिकायमानकीर्तेरात्मनः संमुखीनं दृढतरपरिकरबन्धं जरासन्धं गन्धवहनन्दनः पञ्चदशदिनानि नियुध्य तेषां तृतीयभागपरिसंख्यानपदाभिधेयेन सह योजयामास ॥

हते तस्मिंस्त्रयो दीप्रा हरिप्रस्थमुपाययुः ।
आगामिनि मखे हव्यमदित्सव इवाग्नयः ॥ ३ ॥

कृष्णे गते यदुपुरीं क्षितिपानुजानां
जित्वा दिशः प्रतिनिवृत्तवतां चतुर्णाम् ।
कोशे ममुः परमसिप्रवरा गृहीता
दोर्ष्णोर्बलेन महता न तु हेमपुञ्जाः ॥ ४ ॥

उपयनत्वेन नृपाय सर्वैर्दत्तेषु वित्तेष्वखिलेषु भूपैः ।
पार्थस्य पुर्याः क्षितिरेव भेजे वसुन्धरा वाचकवाच्यभावम् ॥ ५ ॥

नरदेवमगाज्जये प्रतीच्या नकुलेनैव वसूनि विस्तृतानि ।
दधदानकदुन्दुभिस्वनैर्यां दलयन्नानकदुन्दुभेः कुमारः ॥ ६ ॥

हरिणा स ततः कृताभ्यनुज्ञो हविरादातुमिवागतेन साक्षात् ।
क्रमवेदिपुरोधसां स वृन्दैः क्रतुमाहर्तुमुपक्रमं प्रचक्रे ॥ ७ ॥

प्राग्वंशेऽप्युत्तमे तिष्ठन्प्राग्वंशं पुनराविशत् ।
कुरीरशिरसा पत्न्या कुरुवीरः स दीक्षितः ॥ ८ ॥

आघ्रातुमिच्छुरनलो हविरत्र रुच्य-
मानीलधूमकुलनिर्गमनापदेशात् ।
जग्धान्पुरा जतुनिकेतनभित्तिखण्डा-
न्कुक्षिस्थितानिव ववाम गुरूनजीर्णान् ॥ ९ ॥

तत्र प्रवर्ग्यजनितं दिवि धूमचक्र-
मालक्ष्यते स्म विबुधान्प्रति पावकेन ।
आनाकदुर्वहहविर्द्रविणेन वेगा-
दाह्वानपत्रवलयं किल नीयमानम् ॥ १० ॥

मेदस्विनं विपुलखाण्डवभक्षणेन
देहं निजं चलयितुं शिखिनोऽक्षमस्य ।
उद्भ्रम्य संज्वलितुमुत्तरवेदिकाया-
मालम्बनाय किल यूपवरोऽन्तिकेऽभूत् ॥ ११ ॥

बिम्बेन सङ्गं त्रिसपुष्पबन्धोर्नाथः कलानां न यथा विदध्यात् ।
तथैव देवास्तत्पुस्तदानीमत्यद्भुतानां हविषां विशेषैः ॥ १२ ॥

सर्वेषु वर्णेष्वपि दातुरस्मात्संप्राप्तवत्स्वर्थमजातशत्रोः ।
न वर्ण एकस्तु कदापि लेभे नार्थं क्रतूनामिह सार्वभौमे ॥ १३ ॥





तत्र नानाजनपदमेदिनीवल्लभमल्लमुकुटमणिकिरणपल्लविते यज्ञवाटे त्रिपथगापृथातनुजाभ्यां नियुक्तो वैमात्रेयैर्भ्रातृभिर्जतुभवनवनप्लवनेषु पृथक्पृथगाराधिततया स्वेनाप्यातिथ्यायामन्त्र्यमाणेन वीतिहोत्रेणेव ज्वलता हेमपात्रेण परिष्क्रियमाणपाणितलः सहदेवो निखिलभक्तजनकृत्यनिर्वहणभारेणेव निभृतावयवं सभ्यलोकलोचनपक्ष्मयुगलपङ्क्तिपरस्परवैमुख्यवदान्यरूपकोमलिमानं महर्षिजनवलयमध्यमहेन्द्रनीलरत्नं चिरंतनं पुमांसं समासाद्य प्रथममर्घ्येण परिपूजयांचक्रे ॥

तावत्प्रकोपात्तरलाधरस्य प्रतिक्षितीशानभयानकस्य ।
वेदीभुवं तत्र विहाय वह्निश्चेदीशितुश्चित्तमिवाविवेश ॥ १४ ॥

सदसि न विकृतो यदच्युतोऽभू-
त्स तु परुषाक्षरमण्डलेन शत्रोः ।
बहिरवसदुपेत्य तच्छ्रुतोभ्यां
बहुतरकुण्डलनीलरत्नलक्ष्यात् ॥ १५ ॥

अश्लीलवागिह समाप्तिमती नवेति
संद्रष्टुकाममिव दानववैरिचक्रम् ।
कल्पान्ततिग्मकरकल्पमनल्पवेगं
कण्ठे बिभेद रणकर्मणि दामघोषम् ॥ १६ ॥

इति तस्य दुर्मतेरायुषा सह समापिते सवनकर्मणि निर्मितावभृथाप्लवनमुपदात्रेन दत्तपूर्वाणि वित्तान्युत्तमर्णानिव पुनर्द्विगुणमेव ग्राहितान्सर्वानुर्वीपतीन्प्रस्थापितवन्तं पौरवं तमनुज्ञाप्य चैद्यनिधनोत्सवेन सुदर्शनस्येव स्वपुरजनलोचनस्यापि नवास्रकणिकार्द्रतामनुभवितुमना इव सनातनः पुमान्पुरीं पुरानुभूतकुशस्थलीनाम्नीं प्रतस्थे ॥

अन्धभूपतनयोऽपि बलौघैर्हास्तिनं पुरमवाप्य विलक्षः ।
सौबलिं गिरमसौ बलवन्तं दुर्विचाररचनासु चचक्षे ॥ १७ ॥



अग्नेरपत्यमिति हेम यदाहुरेत-
न्मिथ्या न मातुल विरोधिमखेऽनुभूतम् ।
तत्स्मर्यमाणमखिलक्षितिपोपनीतं
नक्तं दिवं दहति चित्तमिदं यतो मे ॥ १८ ॥

वल्गत्कुचं परिजहास सभावलोके
मां द्रौपदी मणिभुविस्खलितं यदुच्चैः ।
तत्साधुजातमिति वक्तुमिव स्नुषां स्वां
मत्प्राणवायुरयमुत्क्रमणेच्छुरास्ते ॥ १९ ॥

अधुना युधिसेनाभिर्विधुन्वानो धरातलम् ।
विधाय निधनं तेषां निगृह्णीयामिमां शुचम् ॥ २० ॥

इति निगद्य व्रीडाव्यथानद्योः संगमे निमग्नमेनमभग्नकैतवबन्धुः गान्धारपति-रुत्तारयितुमेवमुत्तरमादत्त ।

जय्यतां कथमुपैति तेऽर्जुनो वत्स यद्युधि भयात्पलायिताः ।
केवलं हरिमुखा न नामतो वेगतोऽपि मरुतोऽभवन् सुराः ॥ २१ ॥

अपि च ।

तं वीक्षितुं जगति शक्नुयुरत्र के वा
भीम प्रकोपधृतभीमगदाङ्कबाहुम् ।
एकैकमुष्टिहतये स्म भवन्ति नालं
यस्याहवे बकवृहद्रथभूहिडिम्बाः ॥ २२ ॥

ताभ्यामुपास्यमानस्य तपसस्तनुजन्मनः ।
व्यापादेऽपि प्रसक्तिः का विशेषात्तादृशां रणे ॥ २३ ॥

तथाप्यहं तु तत्र च तेषां च परस्परं विभवे परिपणनपदाधिरोहिणि क्षणादक्षममाणेन जगत्सामान्यतामक्षसंप्रदायेन तं पराजयघण्टापथे संचारयिष्यामि ॥

विते हृते दरिद्रास्ते विसृष्टा बन्दुभिः स्वयम् ।
विनाशं वा शुचा यायुः विदेशं वाथ लज्जया ॥ २४ ॥

त्वं ततस्तु सुखमात्मसंयुतैः सोदरैः सदृशसंख्यकाः समाः ।
नीरराशिहरिनीलमेखलां निःसपत्नमनुभुङ्क्ष्व मेदिनीम् ॥ २५ ॥

इत्थंकारं रहसि कल्पिते कैतकदुरध्वे तावुभावप्यनुधावितुं दिव्यचक्षुषा तेनान्धेन वसुन्धराधिपतिना नवमणिमण्डपिकाप्रवेशोत्सवव्याजादाहूतः सानुजो धर्मजः कुरुपत्तनमुपेत्य बन्धुतया प्रत्युद्गम्यमानो दुस्तरं भाविवनवासदर्षमेकैकमेकैकेन प्रणिपातपुण्येन सुप्रतरं करिष्यन्निव पितृव्यं द्वादशकृत्वः पादयोः प्राणंसीत् ॥

अवभृथाम्बुकणैरिव नूतनैरधिगतामथ जालकमौक्तिकैः ।
स्वकबरीं द्रुपदस्य सुतापि सा सुबलजा पदयोः समनीयत ॥ २६ ॥

अनुजाभिरनामयानुयुक्तैरभिनन्द्य क्रतुकाभलालनाभिः ।
सदनाय ससर्ज तं विनीतं सधृताकारनिगूहनो महीपः ॥ २७ ॥

तावन्मदीयतनुभेदिभटान्तहेतु-
र्वैरं मिथः प्रभविता कुरुभूभुजां श्वः ।
इत्यन्तराहतशुचेव दिशि प्रचीच्यां
मन्दायमानमहसा रविणा निपेते ॥ २८ ॥

दिग्धे संतमसैः सान्द्रैर्दिशापदिशचत्वरे ।
सर्वाः प्रजास्तदा राज्ञा समारुक्षन्दृशा तुलाम् ॥ २९ ॥

मनुजावलीनयनवर्त्मने पुनर्मघवादिदेवममभावगोचरा: ।
ककुभो विभेजुरमृतांशुभानव: क्षणमेव तं प्रथमशैलरोहिण: ॥ ३० ॥

अथोपकार्यामधितिष्ठतोऽस्य संदर्शनायानिशमापतद्भिः ।
अशेषपौरैरतिबाल्यमित्रैरशेषि किंचिन्न तया रजन्या ॥ ३१ ॥

धर्मजन्मा तत: कर्म निर्माायाहर्मुखोचितम् ।
सभां स भासुरां पौरैर्भूपैश्चापाक्षवेदिभिः ॥ ३२ ॥

तत्र चित्रीयमाणेष्वनल्पचतुरिमजल्पाकेषु सभाशिल्पिषु दृशं परिकल्पयतः प्रज्ञादृशं निकषा मूर्ते तृतीयगुण इव दिविषद्वृषभनीलदृषदासने निषीदतोऽमुष्य कुरुकुलप्रदीपस्य प्रतीपं निविशमानः शकुनिः स्थानाद्भ्रंशयितुं साक्षात्कृतसंनिधी रिक्तमध्यमवर्णया तदीयाभिख्यया वाच्यो ग्रहविशेष इव प्रासङ्गिकेन पथा दुरोदरविहारेऽवतारमचिरमभिरोचयामास ।

अथ सदसि महत्यां चाज्ञयासौ नियत्याः
सुमतिमपि विमुह्य द्यूतमार्गे प्रवृत्तम् ।
बहुषु जनपदेषु प्राप्नुवत्सु ग्लहत्वं
सपदि सुबलसूनुर्धर्मसूनुं विजिग्ये ॥ ३३ ॥

एकेन यत्सुबलभूर्युगपद्ग्रहीतु-
मक्षेण सर्वविषयान्नृपतेरशक्नोत् ।
अस्मात्परं जगति वाच्यतयाभ्युपेत्य
तिष्ठेत किं नु परमाद्भुतवाचकाय ॥ ३४ ॥

प्रतिदेवनमेवमेव भूषाः प्रचुरान्रत्नचयांश्च हेमराशीन् ।
सहजान्सह जाययास्य जित्वा स तु गान्धारपतिर्जगर्ज हर्षात् ॥ ३५ ॥

तत्रान्तरे ।

घटीचेठी नोऽभूद्बहुपतिवधूटी द्रुपदजा
वराकीं तामत्रानय परिषदीत्यग्रजगिरम् ।
हरन्द्वैतीयीकः सुबलतनयासूनुषु जवा-
त्समुत्तस्थौ साक्षादवनिमवतीर्णो यम इव ॥ ३६ ॥

दृष्ट्वा भिया सदसि धावनमाचरन्त्याः
कैश्ये चकार स कराङ्गुलिमानताङ्ग्याः ।
वक्षोरुहेषु च महीपपुरन्ध्रिवर्गा
नासाग्रसीम्नि सुधियश्च नदीसुताद्याः ॥ ३७ ॥

तत्र स दुर्मेधा बलवदाकर्षणोद्भिदुराणि स्वेदपृषन्तीव भूषाजालकमुक्ताफलानि धारयन्त्याश्चिकुरभागात्करतलनिष्पीडननिर्गलितां कालिमधारामिव निर्भरकुवलयगर्भक-माल्यरसझरीमश्रुभिः सह वर्षन्त्यास्तस्याः पातिव्रत्यलक्ष्मीनिवासस्फटिक प्राकारमिव दुकूलमप्याहर्तुं प्रवर्तत ।

तादृक्ष समुपस्थिते परिभवे सभ्येषु वाचंयमे-
ष्वाध्यायस्तु विधेर्बलं स्वदयितेष्वन्येष्व शक्तेष्वपि ।
निश्चित्यार्तिमतां गतिं यदुपतिं नीव्यां करौ कुर्वती
सा चक्रन्द तदोच्चकैरिह हरे त्रायस्व हा मामिति ॥ ३८ ॥

तस्याः सभायां ह्रियमाणवस्त्रात्तन्व्या नितम्बात्सहसाविरासीत् ।
कंसारिकारुण्यपयःपयोधे कल्लोलमालेव दुकूलपङ्क्तिः ॥ ३९ ॥

हृते हृते वाससि हृद्यरूपं वासोऽन्तरं यद्ववृधे वराङ्ग्याः ।
नरस्य तेनैव न कस्य तत्र चित्तस्य नाव्योऽजनि चित्रपूरः ॥ ४० ॥

अदृश्यस्यापहारेऽपि वर्धितानेकवाससः ।
अम्बरप्रायता तस्या मध्यस्योभयथाप्यभूत् ॥ ४१ ॥

चेलानि कर्षश्चिरमन्धसूनुस्तस्यास्तु नग्नंकरणः स नाभूत् ।
श्रमात्स्खलित्वा धरणौ पतन्सन्दन्तावलेरेव जनव्रजानाम् ॥ ४२ ॥

अथ तथाभूतपरुषयोषाभिषङ्गरोषकलुषेण पृषदश्वजनुषा परिषदि भीषणमेवं बभाषे ।

उरसि स्खलदूष्मलं मृगाक्ष्याः समितावस्त्रमिदं यथाहमक्ष्णा ।
द्विषतः कचकर्षिणोऽप्यमुष्या रसनेनानुभवेयमेवमेव ॥ ४३ ॥

किं च सरसीव चलत्कबन्धबन्धुरे समराजिरे तामरसच्छदानिव शतमपि विमतानेतान्हेमन्त इवाहं धार्तराष्ट्रशब्दशेषां महागदापत्तिं गमयिष्यामीति ॥ तत्र सुत्राम्णः पुत्रोऽप्येवं प्रतिजज्ञे ॥

उत्सेकात्कृतहस्ततालममुना गान्धारपुत्रीभुवा
राधासूनुरसौ जहास सदसि ग्राम्यं ब्रुवन्यत्ततः ।
यस्यां जात्वपि देहिनोऽभ्युदितता नैवाभिनिर्मुक्तता
स्यातां द्वे अपि गाण्डिवो मम तु तां निद्राममुं नेष्यति ॥ ४४ ॥

इति तयोस्तादृशेन वीरवादेन 'अयि, सुखमिहास्व' इति करास्फालन-निदर्शिते सक्थिन्येव तव मृत्युः स्यादिति सुयोधनं प्रति याज्ञसेन्याः शापेन च भया-त्तगन्धाभ्यामन्धदम्पतीभ्यां [illegible]पुरं राज्यं प्रत्यर्प्य हरिप्रस्थं प्रस्थापितो युधिष्ठिरः पुनरपि कृतमन्त्रैरमित्रैरयमा[illegible]मात्रोऽर्धपथाद्द्विषिना गलहस्तिकया विनिवर्तित इव तामेव सभां प्रत्यावर्तत ।

भूताभिविष्ट इव बोधवतां वरोऽपि
भूयोऽपि ध[illegible]तनयः सह सौबलेन ।

आधत्त देवनविहारमनार्यजुष्ट-
माद्यक्षरं विजहदेव पणोऽपि योऽभूत् ॥ ४५ ॥

कितवे शकुनौ वशंवदान् किरति स्वेन करेण पाशकान् ।
विजयेन सदा पुरस्कृतोऽप्यभवत्तेन स पृष्ठतः कृतः ॥ ४६ ॥

उत्थायाथ क्षितीन्द्रः क्षणमपि धरणौ स्थातुमस्यामयुक्तं
प्रत्यर्थिस्वीकृतायामिति सहसहजैः सत्यसन्धः सजानिः ।
पाणौ क्षत्तुर्निधाय प्रसुवमतितरामन्तरुत्तप्यमाना
पद्भ्यां प्रापद्वनानि व्यथितहृदमुचत्पौरलोकस्तु दृग्भ्याम् ॥ ४७ ॥

कान्तारवर्त्मनि मृगाः परितो निषण्णाः
शान्ताकृतेः सधनुषोऽपि निषङ्गिणोऽपि ।
उत्थाय तस्य पटुमर्मरचारुचीरं
रोमन्थलोलचिबुकेन मुखेन जि : ॥ ४८ ॥

परागपूर्णं पथि तस्य पादरेखा घटस्य प्रतिमा मनोज्ञाः ।
भक्त्योपनीता वनदेवताभिः पाद्योदकुम्भा इव जाग्रति स्म ॥ ४९ ॥

क्रमेण ते सजानयः विलङ्घ्य विविधानि विपिनानि जह्नुमुनिकर्णशष्कुली-
पथवशेन शिक्षितैर्गतिविशेषैरिव गभीरैरावर्तैरुपासिकजनताहृतानि संसारचक्राणीव
दर्शयन्तीं कोकनदवदनोदितैरिव कोककुटुम्बकूजितैः कुमारस्य देवव्रतस्य कुशलं
पृच्छन्तीमिव भागीरथीं पुरस्कृत्य तत्र तां निशीथिनीं पश्चाच्चक्रुः । अथैवरतिमात्र
बुभुक्षितानुयात्रिकसत्रिजनप त्रा गाय पवित्रैः स्तोत्रैः प्रसेदुषा चित्रभानुना दत्तमक्षय्य-
मन्नपात्रमादाय ते कलत्रे निदधुः ।

वनं ततः काम्यकमे य तेषु वसत्सु भीमस्तु नियोद्धुकामम् ।
किर्मीरमुग्रं कुणपाशनेन्द्रं क्षिप्रं तदाहारदशामनैषीत् ॥ ५० ॥

ततश्चरन्द्वैतवने स सार्धं वध्वा कदध्वालसतामबुध्वा ।
मूलानि सर्वस्य शुभस्य भूपो मूलानि जग्राह मुनीन्द्रसंघात् ॥ ५१ ॥

तत्राथ ते सत्यवतीसुतस्य पादारविन्दात्प्रविसृत्वरीभिः ।
नखप्रभाभिर्नवपुष्पपङ्क्तीर्जटालतानां जनयांबभूवुः ॥ ५२ ॥

तस्मिन्कवौ तापसयूथनाथे स्वातीमथाजग्मुषि वासभूमिम् ।
तेषामतिक्षामतया युतानां शुचाक्षिदेशेष्वतिवृष्टिरासीत् ॥ ५३ ॥

प्रसृमरतनुभासा प्रावृषेण्यान्स मेघा-
न्दिशि दिशि विदधानो दीर्धदर्शी तदानीम् ।
कुरव इति महान्तं शब्दमाबिभ्रतोऽपि
स्ववचननिपुणिम्ना तानशोकानकार्षीत् ॥ ५४ ॥

तस्मात्प्रतिश्रुतिरिति प्रतिपद्य विद्या-
मालिङ्ग्य धर्मतनयेन विसृज्यमानः ।
पार्थो हिमाचलमगात्परमास्त्रमाप्तुं
शंभोः कृपाजलनिधेश्चरणार्चनाभिः ॥ ५५ ॥

यस्मिन्हिमानीभृति यक्षवृन्दमङ्गेषु सर्वेष्वपि मञ्जुलेषु ।
नखंपचोष्णं नलिनेक्षणानामुरोजनेवातितरामुपास्ते ॥ ५६ ॥

यो वत्सतामेत्य वसुन्धराया निपीय रत्नावलिकान्तिपूरान् ।
मनःशिलावप्रझरीमिषेण दरीमुखैरुद्गिरतीव तृप्तः ॥ ५७ ॥

आरोहतस्तं तरसा समीरकिशोरकः स्वेदजलाणुराजिम् ।
निपीय तस्याननपद्ममाध्वीं द्विरेफभावं प्रकटीचकार ॥ ५८ ॥

शिवाख्ययोरेकतनुत्वकारणं
त्रिलोकपित्रोर्महसोस्तपोवनम् ।
मिथोऽर्च्यमानं मिथुनैस्तपस्विनाम्
तथेच्छुभिस्तत्र ननाम पाण्डवः ॥ ५९ ॥

तत्र दर्भदलमुष्टिमाहरन्सन्निधास्य वृषभोपदामिव ।
चित्तमीशपदयोः समादधत्तप्तुमारभत दुश्चरं तपः ॥ ६० ॥

चतुरस्तपः स्थितिविशेषविधौ
चरणं विधातुमखिलेन निजम् ।
सजुगुप्समान इव शत्रुजिते
प्रपदेन तिष्ठति भुवः स्म तले ॥ ६१ ॥

भानौ ललाटंतपभानुजाले प्रविष्टदृष्टिं परितस्तमग्निः ।
भूयोऽपि मोक्तुं विपिनं दिशेति प्रेम्णोपरुन्धन्निव दृश्यते स्म ॥ ६२ ॥

तपोविधौ स पावकेन सर्वदिक्षु वासवि-
स्तदा बभूव वेष्टितो धनंजयस्वबान्धवात् ।
अजीजनत्तमङ्गराजमङ्ग वैरिणं भवा-
नितीव रोषितो दिनेश एव चक्षुरक्षिपत् ॥ ६३ ॥

पाराशरिप्रापितमन्त्रभागैराराधयन् शंकरमन्तरङ्गे ।
सप्तापि चर्षीस्तपसा विजेतुं सप्तत्वमाप स्वयमेक एव ॥ ६४ ॥

फलपर्णजलानिलाशनानि प्रविहाय क्रमशस्तपस्यतोऽस्य ।
विषयेषु न लोलतां प्रपेदे विजयस्याक्षगुणः कराग्र एव ॥ ६५ ॥

तपादृशेन तपसा तरुणेन्दुमौलिं
तन्वन्दयापरवशं तनयो मघोनः ।

पादाग्रमेव धरणौ प्रणिधाय तस्था-
वुद्यम्य बाहुमुपरीव फलानि लिप्सुः ॥ ६५ ॥

निरुध्य वायुं निभृतं तपस्यतः
शिरःसमुत्था दशदिग्विसृत्वरी ।
नटत्स्फुलिङ्गा नव धूमसन्ततिः
स्फुटीचकारास्य धनंजयाभिधाम् ॥ ६७ ॥

तस्याथ नारदमुखात्तपसः प्रभावं
श्रुत्वा हरस्त्रिजगतामधिपो दयालुः ।
देव्या दृशा सदसि सूचिततद्दिदृक्षो-
र्दित्सन्नभीष्टमपि लुब्धकतामयासीत् ॥ ६८ ॥

हेरम्बगण्डमदपङ्कविशेषकौ तौ
स्कन्दोपवाह्यशिखिपिच्छकृतावचूडौ ।
भूयाधुनीतटतरुच्छदक्लृप्तवस्त्रौ
कोदण्डिनौ व्यरुचतां कुहनाकिरातौ ॥ ६९ ॥

शबरत्वजुषः परस्य पुंसः शशिखण्डान्नु शकारसंविधानम् ।
भजति स्म तदा शिखण्डभावं भगवन्मस्तकभूषणं यदेषः ॥ ७० ॥

तदानीमेव रजतगिरिशिखरान्निर्गच्छन्तौ किमेतदिति साशयैरपि तदनुसरणोचितवेषरचनानुकूलैः प्रमथकुलैः परिवार्यमाणौ, समुच्चलितलाङ्गूलमितस्ततो धावद्भिर्दूरचारश्रमविदारितवदनलम्बमानरसनाग्रनिपातिनीभिः सृणिकाकणिकाभिर्वनपद्धतिं शुद्धतरीं कुर्वद्भिर्दृढतरश्वसितकम्पमानावयवैस्तेषु तेषु वनगुल्मेषु श्वापदानन्विष्यान्विष्य हुंकारमाचरद्भिर्विश्वनिगमविश्वकद्रुभिरविमुच्यमानपार्श्वभागौ, दीपकमृगायमाणनिजहरिणशावकपार्ष्णिभागानुधावनौ, भाविनि पदे पदे वनदेवताभिरर्घ्यमाणसुरतरुप्रसवास्तरणेन प्रशमिततुहिनजडिमोद्वेगेन हिमवतः कटकपथेन सविलासं संचरमाणौ

कावेतौ कदाचिदप्यदृष्टपूर्वौ वनमस्मदीयमाक्रमेते इति रोषकषायिततया निवारयितुकामै-रपि तेजोविशेषेण प्रतिहतोत्साहैरन्यैः शबरयुवभिः केवलमवलोक्यमानौ, जटावल्लरी-मूलपल्लवमुकुलीभवदञ्जलिभिस्तपस्विपुञ्जैर्नभसि विमानवेगं निरुध्य हर्षाश्रुभिर्मरुद्भि-श्चाभिवर्ष्यमाणजयशब्दौ, तौ जगदादिमौ दंपती सविनयमुपासीनस्य शुनासीरसुतस्य तपोवनसीमानं शनैः शनैरासीदताम् ।

तत्र खलु

आपादलम्बिजटमातपमात्रभक्ष-
मूर्ध्वीभवद्भुजमुदारतपःकृशाङ्गम् ।
दृष्ट्यानुगृह्य कुरुवीरमुनीन्द्रमेनं
त्रेधा बभूव सुतवत्सलता भवान्याः ॥ ७१ ॥

क्षोदयन्नथ महीं खुरपातैः कोऽपि कोपकुटिलो वनकोलः ।
घोरघूत्करणघोणमुपागात्कुक्षिमाश्रमभुवः कुरुसूनोः ॥ ७२ ॥

तं वीक्ष्य रौद्रवपुषं मृगशावकेषु
त्रासाद्विशत्सु कटिलम्बितवल्कभागान् ।
पर्याकुले कलकलैरपि पक्षिजाले
पार्थो निवृत्य नियमाज्जगृहे शरासम् ॥ ७३ ॥

मुनिरेष यदाभ्ययाद्वराहं मुखरज्यालतिको जवाज्जिघांसुः ।
शबरो ददृशे तदाभिधावन्धनुराकृष्य सहानुयायिवर्गैः ॥ ७४ ॥

मा मुञ्च बाणं मदनुद्रुतेऽस्मिन्नपेहि जाल्मेति किरातनेतुः ।
वचः सलक्ष्यं मनसो न कुर्वन्वराहमस्त्रस्य चकार लक्ष्यम् ॥ ७५ ॥

शिलीमुखाभ्यां शिवसव्यसाचिनोः
समुज्झिताभ्यां युगपत्किटेस्तनौ ।

समं विभज्यायुरभुञ्जत क्षणा
त्सहोदराभ्यामिव पैतृकं धनम् ॥ ७६ ॥

ततः कुपितोऽपि कुरुप्रवीरस्तपःश्रान्ततया नातिपरुषमेवमुवाच ।

अस्मिन्ममावसथमापतिते मया प्रा-
गलक्षीकृते शबर यत्प्रहृतं त्वया तत् ।
शापस्य वाथ धनुषोऽसि वशे तथापि
सोढुं ममाद्य तपसा च भुजोष्मणा च ॥ ७७ ॥

इति तस्य मुनेरन्तर्दर्परसपरीबाहवेणीमिव वाणीमाकर्ण्य क्षोणीधरधन्वापि सस्मितं प्रत्यभाणीत् ।

मृदुबुद्धिरङ्ग वचसैव लक्ष्यसे
मृगहिंसनं विपिनसीमनीदृशम्
शतशः स्वधर्म इति पठ्यते बुधैः
शबरस्य वा वद तपोधनस्य वा ॥ ७८ ॥

तत् स्वकुलाचारादप्रमाद्यते मह्यमयुक्तकारिणापि त्वया कियद्दूरं प्रकाश्यते तपसीव बाहावप्याहो पुरुषिका ।

संदृश्यते खलु तपस्तव शुद्धमेत-
द्यज्जन्तुहिंसनविधौ दृढबद्धकच्छम् ।
आस्तामिदं भुजबलं च मृगात्ययेऽस्मि-
न्साहाय्यकं यदुपजीवति मे शरस्य ॥ ७९ ॥

ईदृशीं वचनरीतिमपास्यन्नेहि सान्त्वय कियानसि मे त्वम् ।
अक्ष्णि किंचिदरुणिम्नि जगत्यामन्तकोऽपि मदतीव बिभीयात् ॥ ८० ॥

इति शंकरस्याहंकारवादेन सातङ्कः कुरुकुलशशाङ्कः पुनरपि कामपि गिरमेव-मङ्कुरयामास ।

यस्माद्वनेचरकुलाधम जल्पसि त्व-
मेवं मनः पुलकयन्स्वजनस्य दृप्तः ।
तस्मादसंशयमुपान्तजुषः किरात्या-
स्ताटङ्कमेव सहसे न कपोलमित्रम् ॥ ८१ ॥

तादृग्वचः श्रवणदाहि मुनेर्निशम्य
सर्वे गणा हृदि रुषा निजिघांसवोऽपि ।
देव्या विलोक्य वदनं स्मितगर्भगण्डं
तूणार्धकृष्टविशिखेन करेण तस्थुः ॥ ८२ ॥

अथ भिल्लमल्लकुरुवल्लभावुभौ
परिफुल्लभल्लकुलशल्यपल्लवैः ।
स्थगितावलोकसरणिं दिवौकसां
समरं भयङ्करजवं वितेनतुः ॥ ८३ ॥

श्लथबन्धगरुद्भिरेष बाणैः
श्रवणालम्बिजपाक्षसूत्रघर्षात् ।
प्रमथेशमवाकिरत्त्वदीयं
प्रतिमालिङ्गमिव प्रसूनपुञ्जैः ॥ ८४ ॥

सरुषीव हरे विकृष्टचापे सशरं शैलसुतापि जातशङ्का ।
मघवत्सुतमङ्गलाय देवी मनसा यातइषुः श्रुतिं जजाप ॥ ८५ ॥

ससंभ्रमाकृष्टधनुर्गुणोऽपि शंभुः कृपाम्भोनिधिरिन्द्रसूनौ ।
संबद्धमात्रान्कतिचिच्च देहे चक्रेऽपराद्धान्कतिचिच्च बाणान् ॥ ८६ ॥

विगाह्य शंभुं विजयस्य बाणाः
पुनः पदत्वं पुपुषुर्न दृष्ट्योः ।
नरादुदारादभिगम्य लुब्धं
न मार्गणा यान्ति खलु प्रकाशम् ॥ ८७ ॥

निःस्वे निषङ्गयुगले नितराममर्षी
चापेन मूर्ध्नि गिरिशं पुर एव देव्याः ।
पार्ष्णिप्रमुक्तधरणिः प्रजहार वेगा-
त्कुर्वन्व्रणं स कुटिलं शशिखण्डमित्रम् ॥ ८८ ॥

धनुषाभिहतात्समुत्थितैर्धरकन्यारमणस्य मस्तकात् ।
विपुलैरिव रक्तशीकरैर्विनिपेते मणिभिः फणाभृताम् ॥ ८९ ॥

देवस्य तस्य जगतां जनकस्य चित्ते
पार्थप्रहारजनुषः प्रमदाम्बुराशेः ।
भूषाधुनीतटभुवि द्विपवक्त्रबाल्य-
वप्रक्रियाभिरुदितः प्रमदः कणोऽभूत् ॥ ९० ॥

स गाण्डीवदण्डोऽपि खाण्डवे तक्षकवधूवधसाधनतया चिरमयमस्मत्कुलविरोधीति क्रोधनैस्तस्य जटावनकुटुम्बिभिर्भक्षित इव तत्क्षणं नालक्ष्यत । ततोऽयं दैवविपर्ययः किमुतामुष्य माया किमिति चिन्तापरतन्त्रेणापि धैर्यदत्तहस्तोत्साहेन 'तिष्ठ तिष्ठ जडात्मन्, एवमर्जुनं निर्जित्य यशोऽर्जितुमिच्छसि' इति कृततर्जनेन सितवाहनेन वृषवाहनं प्रति नियोद्धुमारेभे ।

परुषे मुनिमुष्टिताडने पतिते लुब्धकवामवक्षसि ।
शिथिला जगलुः किरातिकायाः सितगुंजामणिहारयष्टयः ॥ ९१ ॥

उपवासकृशे भृशं मुनेरुरसि स्वीकृतमुष्टिमार्दवः ।
प्रजहार हरोऽपि पीडनात्परिहर्तुं स्वमिवास्य हृद्गतम् ॥ ९२ ॥

इति परस्परमुष्टिप्रहारवृष्टिपरिमृष्टवनकुसुमपरागभस्माङ्गरागौ सरभसमेकेन बाहुना जटासु गृहीत्वापरेण बाहुना वलयितगलनालौ तौ शबरतपोधनौ यदा महत्यामभित्यकायामापततां तदा झटिति घटितद्वारदरीगर्भनिरुद्धसिद्धमिथुननिबद्धहाहाकारस्तीरवनद्रुोत्सर्पिवीचीवेगोत्पाटिताकृष्टमुनिजनपर्णशालासहस्रसुरस्रवन्तीपूरो दर्वीकरविमुक्तधराखर्वीकरणपटुभारोऽयमुर्वीधरपतिरासीत् ।

पार्थस्य तस्य भुजयोः परमेश्वरोऽसौ
वीर्यं विलोक्य युधि विस्मयमानचेताः ।
चापव्रणे सुरनदीकणसेकशङ्का-
मप्युत्सृजन्मुहुरकम्पयदुत्तमाङ्गम् ॥ ९४ ॥

तथाविध एवासौ चिरादाचरितचेतनास्वागताचारः शनैरुत्थाय पुरतो घण्टाघणघणात्कारसहचरेण कण्ठगर्जितेन कर्णयोः कल्पितसुधारसमोक्षे महोक्षे निषेदिवांसम्, भुजमूलप्रसारित गिरिजापाणियुगल नखराङ्कुरश्रेणीद्विगुणीकृतहारमणिरमणीयवक्षसम्, पारिषदगणाञ्जलिकमलवनमध्यराजहंसायमानम्, मार्दवभरितशार्दूलचर्मनिर्मितपल्ययनपर्यङ्कोपरिभागतिर्यगर्पितचरणपल्लवसंवाहनपरेण शिलादकुमारेण च दर्पदुर्ललननिवारणाय मुखबन्धनकनकशृङ्खलेन निरुध्य मुहुर्मुहुः करपुटास्फालितककुदशृङ्गेण भृङ्गिणा च लक्ष्यमणोभयपक्षभागम्, गाण्डीवदण्डताडनपरिपीडितचूडाशशिनमाश्वासयितुमवतरद्भिरुडुनिकरैरिव सुरतरुकुसुमवर्षैरवकीर्यमाणाम्, जटाभस्मकुशचीरधारिभिस्तैरेव चतुर्भिराम्नायपुरुषैः परिपठ्यमानशतरुद्रीयबिरुदप्रबन्धम्, अम्बरे सविधमवलम्बमानैस्तुम्बुरुप्रभृतिभिः सुरवैणिकैरुपवीण्यमान भक्तजनरक्षणापदानप्रकरणम्

कर्णपूरीकृततमालमञ्जरीमधुमिषेण कटाक्षात्साक्षात्कृपामिव वर्षन्तम्, प्रज्वलद्भिः परिष्कारपन्नगफणारत्नैर्नूत्नैः शरव्रणैरिवानुरज्यमानावयवम्, अवतंसशशिकलापरिगलितकिरणधारापातशीतासहिष्णुतयेव दन्तपटगर्भवर्तिना स्मितेनसूचितहृदयप्रसादम् भगवन्तं महादेवमुद्वीक्ष्य पक्ष्मतटरुहविटपिसमुत्पाटनपटुभिः प्रमोदाश्रुपूरैर्नदीमातृकायमाणपुलकाङ्कुरः सविनयमुपसृत्य पादारविन्दयोः सहस्रकृत्वः प्राणंसीत् ।

स्वामिन्मया जडधिया त्वयि देवदेवे
वाचा शरेण धनुषा दृढमुष्टिना च ।
यच्च चतुर्विधमकारि रणे तदागः
क्षन्तव्यमद्य भवता करुणार्णवेन ॥ ९५ ॥

इति विज्ञापयन्तमेनं पारिजातपल्लवतल्लजप्रतिभल्लस्य पाणितलस्य परामर्शनेन प्रमुषितव्रणवेदनाङ्कं प्लवङ्गकेतनमनङ्गशासनोऽप्येवमवादीम् ।

यथा तृतीयेन युधि प्रवीर
तवापराधेन भवामि तुष्टः ।
तथा न भक्त्या तपसा विभूत्या
तरुप्रसूनार्चनया बहुया ॥ ९६ ॥

इति सुधामाधुरीधुरीणं वचनमभिधाय,

तत्क्षणाद्धनुरिषूनपि तांस्ता-
न्सन्निधाप्य विभुरस्त्रमपि स्वम् ।
पाण्डवाय धनुराहतिरीतेः
पारितोषिकमिव प्रदिदेश ॥ ९७ ॥

तस्याथ पाशुपतलाभदुरापदीप्त-
रक्ष्णोः समक्षमपरिप्लवपक्ष्मपङ्क्तेः ।
आश्चर्यवृत्तिरखिलैरनुगामिभिः स्वैः
अन्तर्दधे स भगवानमृतांशुमौलिः ॥ ९८ ॥

इत्यनन्तभट्टकविकृतौ चम्पूभारते

चतुर्थः स्तबकः

ಟಿಪ್ಪಣಿ ಇತ್ಯಾದಿ

1. यदुवंशस्य केतौ यदुवंशकेतौ ಶ್ರೀ ಕೃಷ್ಣನು.
याते यदुवंशकेतौ 'यस्य च भावेन भावलक्षणम्' ಇದು ಸತಿಸಪ್ತಮಿ.
सुधर्मा = ದೇವಸಭೆ. स्यात् सुधर्मा देवसभा इत्यमरः
जीवः = ಜೀವಾತ್ಮ, ಬೃಹಸ್ಪತಿ 'जीवः प्राणिनि गीष्पतौ' इत्यमरः

2. तामधिष्ठास्नुम् – ಎಂಬಲ್ಲಿ —
'अधिशीङ्स्थासां कर्म' ಸೂತ್ರ
ताम् ಎಂದು ಅಧಿಕರಣಾರ್ಥದಲ್ಲಿ ದ್ವಿತೀಯಾ ಬಂದಿದೆ.
अनु + अशात् = आदिदेश ‌ ‌ ‌ शास् ಧಾತು लुङ्
विपञ्च्याः रवः तस्य सारः तं जानातीति विपञ्चीरवसारज्ञः ನಾರದ.
–निरन्तरायम् = निर्विघ्नम् 'विघ्नोऽन्तरायः प्रत्यूहः' इत्यमरः । सप्ततन्तुम् = यागम् । गन्धवह–सुधान्धोधिप–नन्दनाभ्याम्
गन्धवहश्च सुधान्धोधिपश्च तयोर्नन्दनौ ताभ्याम् ಭೀಮಾರ್ಜುನರಿಂದ द्वन्द्वान्ते

**श्रूयमाणं पदं प्रत्येकमभिसंबध्यते** ಎಂಬ ನ್ಯಾಯದಿಂದ ನಂದನ ಶಬ್ದವನ್ನು ಎರಡೂ ಶಬ್ದಗಳೊಡನೆ ಅನ್ವಯಿಸಲಾಗಿದೆ.

**विशृङ्खला............मागधमपि वितीतव्यापारम्**

ಇಲ್ಲಿ ವಿರೋಧಾಭಾಸಾಲಂಕಾರ. **जरासन्धः** ಎಂಬಲ್ಲಿನ ಪೂರ್ವ ಕಥೆ:

ಬೃಹದ್ರಥನು ಮಗಧ ದೇಶದ ಅರಸು. ಸಂತತಿ ಇಲ್ಲದ ಅವನು ತಪಸ್ಸನ್ನು ಮಾಡಿದನು. ಋಷಿಗಳೊಬ್ಬರು ಒಂದು ಫಲವನ್ನು ಕೊಟ್ಟು, ನಿನ್ನ ಪತ್ನಿಯು ತಿಂದರೆ ಸಂತತಿಯಾಗುವುದೆಂದು ಹರಸಿದರು. ಅವನು ತನ್ನ ಇಬ್ಬರು ಸತಿಯರಿಗೆ ಭಾಗ ಮಾಡಿಕೊಟ್ಟನು. ಆ ಇಬ್ಬರೂ ಆ ಭಾಗಗಳನ್ನು ತಿಂದುದರ ಪರಿಣಾಮವಾಗಿ ಇಬ್ಬರಿಗೂ ಮಧ್ಯ ಸೀಳಿದ ಅರ್ಧ ಅರ್ಧ ಶರೀರಗಳು ಉದಿಸಿದುವು. ಆ ಇಬ್ಬರೂ ಆ ಶರೀರಗಳನ್ನು ತಿಪ್ಪೆಗೆ ಎಸೆಯಿಸಿದರು. ಅದನ್ನು ಕಂಡ ಜರೆ ಎಂಬ ರಾಕ್ಷಸಿಯು ಕೂಡಿಸಿದಳು. ಕೂಡಲೇ ಚೈತನ್ಯವುಂಟಾಗಿ ಆ ಮಗು ಜರಾಸಂಧನೆಂದು ಪ್ರಖ್ಯಾತನಾದನು.

**महारथ** ಲಕ್ಷಣ

**आत्मानं सारथिं चाश्वान्रक्षन्युध्यति यो भटः स महारथसंज्ञः स्यात् ।**

**प्रधनम् = युद्धम्** **ननाथ = ययाचे** **कृष्णश्च कृष्णश्च कृष्णौ = कृष्णार्जुनौ**

**तृतीयभाग परिसंख्यानपदाभिधेयेन = पञ्चताभिधेयेन मरणेन इति तात्पर्यम्**

ಈ ಕವಿಯು ಸಾವು ಕೊಲೆ ಎಂಬ ಶಬ್ದವನ್ನು ಪರ್ಯಾಯವಾಗಿ ಹೇಳಿರುವುದು ಒಂದು ಸೊಗಸು.

3. **अग्नयः—आहवनीय, गार्हपत्य, दक्षिण** ಎಂಬ ಮೂರು ಅಗ್ನಿಗಳು. ಇಲ್ಲಿ ಉತ್ಪ್ರೇಕ್ಷಾಲಂಕಾರ.

**हरिप्रस्थम्** = ಇಂದ್ರ ಪ್ರಸ್ಥಕ್ಕೆ **हरि** ಶಬ್ದದ ಅನೇಕಾರ್ಥಗಳು.

"यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु" ಅಮರ

4. असिप्रवराः कोशे ममुः न तु हेमपुञ्जः ಎಂಬಲ್ಲಿ ಪರಿಸಂಖ್ಯಾಲಂಕಾರ.

5. पार्थस्य.........क्षितिरेव भेजे ಎಂಬಲ್ಲಿ ಪರಿಸಂಖ್ಯಾಲಂಕಾರ.

6. आनकदुन्दुभेः = ವಸುದೇವ. आनकः = पटहः = दुन्दुभिः = भेरी.
ಇಲ್ಲಿ ಶ್ಲೇಷ. ಇಲ್ಲಿ ಔಪಚ್ಛಂದಸಿಕ ವೃತ್ತ.

7. कृता अभ्यनुज्ञा येन सः

8. प्राग्वंशे = ಯಜ್ಞಶಾಲೆಯ ಒಂದು ಭಾಗ. कुरीरम् = ಜಾಲ.

9. गुरून् = ಗಟ್ಟಿಯಾದ ಭಾಗಗಳನ್ನು.
ववाम लिट् – प पद. ಸಾಪಹ್ನವೋತ್ಪ್ರೇಕ್ಷಾ.

10 प्रवर्ग्य ಎಂಬುದು ಯಜ್ಞದಲ್ಲಿ ನಡೆಯುವ ಕರ್ಮವಿಶೇಷ.
आलक्ष्यते स्म = ಕಾಣುತ್ತಿತ್ತು.

11. मेदस्विनम् = ಬಹಳ ಕೊಬ್ಬಿದ.

12. बिसपुष्पबन्धोः = ಸೂರ್ಯನ.

13. वर्णः = ಜಾತಿ, ಅಕ್ಷರ. क्रतूनां सार्वभौमे = राजसूये
गद्य – मल्लः = श्रेष्ठः त्रिपथगातनुजः = भीष्मः पृथातनुजः = धर्मराजः
विमातुः अपत्यानि तैः = वैमात्रेयैः चिरन्तनं पुमांसम् – श्रीकृष्णम् ।

14. प्रतिक्षितीशाः = ಶತ್ರುರಾಜರು.

15. अवोभ्यां बहिः ಸೂತ್ರ
"अप परिबहिरञ्चवः पञ्चम्या" अवोभ्यां ಎಂದು ಪಂಚಮಿ ಬಂದಿದೆ.

16. दानवानां वैरिः तस्य चक्रम् ಶ್ರೀಕೃಷ್ಣನ ಚಕ್ರವು दामघोषम् = ಶಿಶುಪಾಲನನ್ನು
रणकर्मणि = वाक्कलहे

गद्य— सवनकर्मणि=ಯಜ್ಞವು आप्लवनं=ಸ್ನಾನ. उत्तमर्णान्=ಸಾಲಕೊಟ್ಟವರನ್ನು

17. विलक्षः = चकितः सन्। सुबलस्यापत्यं सौबलम् ಶಕುನಿಯನ್ನು.

चचक्षे लिट्–आ. पद

18. हेम = ಚಿನ್ನ

ವಾವ, ಸುವರ್ಣವು ಅಗ್ನಿಯಿಂದ ಹುಟ್ಟಿದುದು ಎಂಬುದು ಸುಳ್ಳಲ್ಲ, ಏಕೆಂದರೆ ಯಾಗದ ಸಂದರ್ಭದಲ್ಲಿ ಆಶ್ರಿತ ರಾಜರು ತಂದೊಪ್ಪಿಸಿದ ಸುವರ್ಣ ರಾಶಿಯನ್ನು ಸ್ಮರಿಸಿಕೊಂಡರೆ ಹಗಲಿರುಳೂ ನನ್ನ ಮನಸ್ಸನ್ನು ದಹಿಸುತ್ತಿದೆ.

ಇಲ್ಲಿ ಪೂರ್ವ ವಾಕ್ಯದ ಅರ್ಥವನ್ನು ಉತ್ತರ ವಾಕ್ಯದ ಅರ್ಥವು ಸಮರ್ಥಿಸುತ್ತಿರುವುದರಿಂದ ಕಾವ್ಯಲಿಂಗಾಲಂಕಾರ.

19. वल्गन्तौ कुचौ यस्मिन् कर्मणि तद्यथा भवति तथा वल्गत्कुचम्।

तत् साधु.........आस्ते :—ನಾನು ಮಣಿಖಚಿತವಾದ ಸಭೆಯಲ್ಲಿ ಎಡಹಿದುದನ್ನು ಕಂಡ ದ್ರೌಪದಿಯು ಜೋರಾಗಿ ನಕ್ಕಳು. ಆಗ ನನ್ನ ಪ್ರಾಣವೇ ಹೋಗುವಷ್ಟು ಅವಮಾನಿತನಾದೆನು. ಎಂಬ ವಿಷಯವನ್ನು ನನ್ನ ಪ್ರಾಣವಾಯುವು ತನ್ನ ಸೊಸೆ ಮಾಡಿದ ಕೆಲಸವು ಸರಿಯಾದುದು ಎಂದು ಪ್ರಶಂಸೆಮಾಡುವುದಕ್ಕೋ ಎಂಬಂತೆ ಶರೀರದಿಂದ ಹೊರಡಲು ತವಕಪಡುತ್ತಿದೆ ಎಂದು ಉತ್ಪ್ರೇಕ್ಷಿಸಿದ್ದಾನೆ.

परैरवमानो हि मानिनां मरणादतिरिच्यते ಎಂದಭಿಪ್ರಾಯ.

20. विधुन्वानः = ನಡುಗಿಸುತ್ತಾ

व्रीडा च व्यथा च ते एव नद्यौ तयोः अभग्नस्य अप्रतिहतस्य कैतवस्य बन्धुः= ಶಕುನಿ ತಡೆಯೇ ಇಲ್ಲದೆ ಪಗಡೆಯಾಡುವುದರಲ್ಲಿ ನಿಷ್ಣಾತ.

21. जेतुं शक्यो जय्यः तस्य भावस्ताम् जय्यताम्। ಸೂತ್ರ क्षय्यजय्यौ शक्यार्थे।

हरिसुताः = इन्द्रादयः मरुतः = ದೇವತೆಗಳು, ವಾಯು.

22. बृहद्रथभूः = जरासन्धः भीमं = भयंकरम्, ಭೀಮನನ್ನು

23. तपसस्तनुजन्मनः = ಧರ್ಮರಾಜನ. व्यापादे = ದ್ರೋಹವನ್ನೆಣಿಸುವಿಕೆಯಲ್ಲಿ

"व्यापादो द्रोहचिन्तनम्" इत्यमरः

गद्य — पराजय एव घण्टापथः ಸೋಲೆಂಬ ರಾಜ ಮಾರ್ಗದಲ್ಲಿ.

24. यायुः, विधिलिङ्. प पद गच्छेयुः इत्यर्थः

25. सोदरैः सद्दशसंख्याकाः समाः = ನೂರುವರ್ಷಗಳು नीरराशिः = ಸಮುದ್ರ.

अनुभुङ्क्ष्व = पालय, लोट् आ–पद

गद्य — द्वादशकृत्वः = ಹನ್ನೆರಡು ಬಾರಿ. ಇಲ್ಲಿ कृत्वसुच् ಪ್ರತ್ಯಯವು ಬಂದಿದೆ. ಮುಂದೆ ಅನುಭವಿಸಬೇಕಾದ ಹನ್ನೆರಡು ವರ್ಷ ವನವಾಸವನ್ನು ಸುಖವಾಗಿ ಕಳೆಯಬೇಕೆಂಬ ಉದ್ದೇಶದಿಂದಲೋ ಎಂಬಂತೆ ಹನ್ನೆರಡು ಸಾರಿ ನಮಿಸಿದನು. ಇಲ್ಲಿ ಉತ್ಪ್ರೇಕ್ಷಾಲಂಕಾರ.

26. द्रुपदस्य सुतापि सुबलजापदयोः स्वकबरीं समनीयत
ದ್ರೌಪದಿಯು ಗಾಂಧಾರಿಯ ಪಾದಗಳಿಗೆ ನಮಿಸಿದಳು ಎಂದಭಿಪ್ರಾಯ.

27. अनुयुक्तिः = ಪ್ರಶ್ನೆ.

28. ಈ ಪದ್ಯದಲ್ಲಿ ಸೂರ್ಯನು ಪಶ್ಚಿಮದಲ್ಲಿ ಮುಳುಗಿದನು ಎಂಬುದನ್ನು—"ನಾಳೆ ಕೌರವ ಪಾಂಡವರಿಗೆ ಸಮರವು ಮೊದಲಿಡುವುದು, ಸಮರಾಂಗಣದಲ್ಲಿ ಮೃತರಾದವರು ತನ್ನ ಮಂಡಲವನ್ನು ಭೇದಿಸಿಕೊಂಡು ಶಾಶ್ವತವಾದ ವೀರಸ್ವರ್ಗ ಸುಖವನ್ನನುಭವಿಸಲು ನುಗ್ಗುವರು ಎಂಬ ದುಃಖದಿಂದಲೋ ಎಂಬಂತೆ ರವಿಯು ನಿಸ್ತೇಜನಾಗಿ 'ಪಶ್ಚಿಮದಲ್ಲಿ ಕಣ್ಮರೆಯಾದನು ಎಂದು ಉತ್ಪ್ರೇಕ್ಷಿಸಿದ್ದಾನೆ.

29 दिशापदिशचत्वरे = ದಿಕ್ಕು ವಿದಿಕ್ಕುಗಳೆಂಬ ಅಂಗಣದಲ್ಲಿ.

30. प्रथमशैलरोहिणः = ಉದಯಾಚಲದಿಂದ ಹೊರಹೊಮ್ಮಿದ तं क्षणम् = ಅದೇ ಸಮಯದಲ್ಲಿ

अत्यन्तसंयोगे द्वितीया तम् ಎಂದು द्वितीया ವಿಭಕ್ತಿ ಬಂದಿದೆ.

31. अशेषपौरे ......... रजन्या ಇಲ್ಲಿ ಪರಿಸಂಖ್ಯಾಲಂಕಾರ.

32. अहर्मुखोचितम् = प्रातःकालोचितम्

आप – लिट् – प. पद ಸೇರಿದನು.

गद्य— अनल्प चतुरिमजल्पाकेषु = ಅಪಾರ ಚಾತುರ್ಯವನ್ನು ಪ್ರಕಟಿಸುತ್ತಿದ್ದ.

प्रज्ञादर्शं निकषा — ಎಂಬಲ್ಲಿ ದ್ವಿತೀಯಾ ಬಂದಿದೆ. 'अभितः परितः समया निकाष हा प्रतियोगेऽपि ಸೂತ್ರ. दिविषदृषभनीलदृष्यत् = ಇಂದ್ರನೀಲಮಣಿ दुरोदरविहारे = ದ್ಯೂತಕ್ರೀಡೆಯಲ್ಲಿ अभिख्या = ಹೆಸರು. रिक्तमध्यमवर्णया तदीयाभिख्यया = ಮಧ್ಯಮಾಕ್ಷರ ರಹಿತವಾದ ಶಕುನಿ ಎಂಬ ಅವನ ಹೆಸರಿನಿಂದ ಸೂಚಿತವಾಗುವ ಗ್ರಹ ಎಂದರೆ ಶನಿ.

33. ग्लहत्वम् = ಪಣವಾಗುವಿಕೆ बिजिग्ये = ಗೆದ್ದನು.

लिट् आ.पद

34. अक्षेण = ಇಂದ್ರಿಯದಿಂದ, ಪಗಡೆಯಿಂದ सर्वविषयान् = ಎಲ್ಲಾ ದೇಶಗಳನ್ನೂ ಎಲ್ಲಾ ವಿಷಯಗಳನ್ನೂ

35. देवनं देवनं प्रतिदेवनम् ಅವ್ಯಯೀಭಾವ ಸಮಾಸ.

36. वधूटी = भार्या घटीचेटी = ನೀರು ತರುವ ಸೇವಕಿ.

द्वितीय एव द्वैतीयीकः "तीयादीकक् स्वार्थे वाच्यः" ಎಂಬ ಅನುಶಾಸನ ವಿವರಿಸುವಂತೆ ईकक् ಪ್ರತ್ಯಯವು ಬಂದಿದೆ.

सम् + उत् + तस्थौ—लिट् प - पद

38. वाचं यमेषु = ಮೌನಶಾಲಿಗಳು नीवी = ನಡುಗಂಟು

चक्रन्द = ಅತ್ತಳು. लिट्, प-पद त्रायस्व—लोट्, आ-पद

40. चित्रपूरः = आश्चर्यरसप्रवाहः

41. अम्बरप्रायता = बहु वस्त्रवत्वम्, आकाशसाम्यता च

42. जनव्रजानां दन्तावलेरेव नग्नं करणोऽभूत् ಎಂಬಲ್ಲಿ ಪರಿಸಂಖ್ಯಾಲಂಕಾರ.

गद्य—पृषदश्वजनुषा = भीमेन, पृषदश्वा गन्धवहः इत्यमरः

43. समितौ = सभायाम्

ಭೀಮನ ಪ್ರತಿಜ್ಞೆ :—ಈ ಸಭಾ ಮಧ್ಯದಲ್ಲಿ ಈ ಹರಿಣಾಕ್ಷಿಯ ಕಣ್ಣಿನಿಂದ ಬಳಬಳನೆ ಎದೆಯ ಮೇಲೆ ಸುರಿಯುತ್ತಿದ್ದ ಬಿಸಿಯಾದ ಕಣ್ಣೀರನ್ನು ನಾನು ಹೇಗೆ ಕಂಡೆನೋ ಹಾಗೆಯೇ ಇವಳ ಕೇಶಾಕರ್ಷಣ ಮಾಡಿದ ಶತ್ರುವಾದ ದುಶ್ಶಾಸನನ ಎದೆಯಿಂದ ಚಿಮ್ಮುವ ಬಿಸಿ ನೆತ್ತರ ಸವಿಯನ್ನು ನಾಲಿಗೆಯಿಂದ ಅನುಭವಿಸುವೆನು.

गद्य—कबन्ध = ಮುಂಡ, ನೀರು धार्तराष्ट्र = ಕೌರವ, ಹಂಸ, गद = ರೋಗ,

गदा = ಗದೆ.

धार्तराष्ट्रोऽसिते हंसे धृतराष्ट्रसुतेपि च; गदो भ्रातरि विष्णोःस्यादामये चायुधे गदा इति विश्वः।

सुत्रामा = ಇಂದ್ರ

44. उत्सेकात् ಗರ್ವದಿಂದ, गान्धारपुत्रीभुवः ದುರ್ಯೋಧನನಿಂದ ಯಾವ ನಿದ್ರೆಯಲ್ಲಿ ಪುನಃ ಏಳುವಿಕೆ ಮತ್ತು ಮಲಗುವಿಕೆಗಳು ಇಲ್ಲವೋ ಅಂತಹ ನಿದ್ರೆಯುಂಟಾಗುವಂತೆ ನನ್ನ ಗಾಂಡೀವವು ಮಾಡುವುದು. ಸಾಯಿಸುವುದು ಎಂಬುದನ್ನು ಬಳಸಿ ಹೇಳಿದ್ದಾನೆ. ಎಂಬಲ್ಲಿ ಪರ್ಯಾಯೋಕ್ತಾಲಂಕಾರ.

गद्य—सक्थिनि = ತೊಡೆಯಲ್ಲಿಯೇ आत्तगन्धः = तिरस्कृतः

आत्तगन्धोभिभूतः स्यादित्यमरः।

गलहस्तिकाः = ಕುತ್ತಿಗೆ ಹಿಡಿದು ದಬ್ಬುವುದು. (ಅರ್ಧ ಚಂದ್ರ ಪ್ರಯೋಗ.)

45. देवनविहारम् = ಪಗಡೆಯಾಟವನ್ನು; ಮೊದಲಕ್ಷರವಿಲ್ಲದ ದೇವನ ವಿಹಾರವೇ ಪಣವಾಯಿತು. ಅಂದರೆ ವನವಿಹಾರವೇ ಪಣವಾಯಿತು.

46. पाशकान् = ದಾಳಗಳನ್ನು

पुरस्कृतोपि स पृष्ठतः कृतः ಇಲ್ಲಿ ವಿರೋಧಾಭಾಸಾಲಂಕಾರ.

पुरस्कृतः = पूजितः, पुरतः स्थापितः पृष्ठतः कृतः = तिरस्कृतः, पश्चात् स्थापितः